# श्रीमध्वविजयमहाकाव्योक्ततीर्थक्षेत्रमीमांसा

## ಶ್ರೀ ಮಧ್ವವಿಜಯ ಮಹಾಕಾವ್ಯೋಕ್ತ ತೀರ್ಥಕ್ಷೇತ್ರ ಮೀಮಾಂಸಾ

तुमकूरु विश्वविद्यालयस्य

**Ph.D उपाध्यर्थं समर्पितः महाप्रबन्धः**


## अनुसन्धाता

बि.गोपालाचार्

**Rig No – 13SA-ET007**

## मार्गदर्शकः

डा.श्रीधर एन् भट्टः

श्रीधर्मस्थळमञ्जुनाथेश्वरसंशोधनकेन्द्रम्

[तुमकूरुविश्वविद्यालयेन मानितम्]

[स्वायत्तः] उजिरे, कर्नाटक ५७४२४०





# तुमकूरु विश्वविद्यालयः

## तुमकूरु –५७२१०३

**2018**

# मङ्गळमातनोतु



कृष्णं वन्दे मन्थपाशधरं दिव्यार्भकाकृतिम् ।
शिखाबन्धत्रयोपेतंभैष्मीमध्वकरार्चितम् ॥

वामेन बाहुना दाम दधानः कोमलाकृतिः।
दक्षिणेन तु मन्थानं सर्वाभीष्टप्रदायकः ॥

# कृतज्ञताऽर्पणम्

महतः सौभाग्यस्य प्रमोदस्य च विषयोऽयं यद् तुमकूरुविश्वविद्यालये **Ph.D** इत्युपाधये "श्रीमध्वविजयमहाकाव्योक्ततीर्थक्षेत्रमीमांसा" इति शीर्षिकाङ्कितः महाप्रबन्धः धर्मस्थळश्रीमञ्जुनाथेश्वरस्य महाप्रसादबलेन समाप्तिमायादिति ।

त्रैलोक्याचार्याणां श्रीमध्वाचार्याणां साधनभूमौ रजतपीठपुरे श्रीअनन्तेश्वर–श्रीचन्द्रेश्वर–श्रीकृष्ण–मुख्यप्राण–श्रीमध्वाचार्य– श्रीवादिराजगुरुसार्वभौमानां दिव्यसन्निधौ इमां महाप्रबन्धतुळसीमञ्जरीं प्रणतिपूर्वकं समर्पयामि ।

अस्मिन् महाप्रबन्धकार्ये विशेषानुग्रहेण आशीर्वादबलम् मे प्रदत्तवद्भ्यः विद्यागुरुभ्यः श्रीपेजावरमठाधिपतिभ्यः श्रीश्रीविश्वेशतीर्थश्रीपादेभ्यः, जीवने अभयं दत्वा सदा संरक्षणं कुर्वद्भ्यः श्रीपुत्तिगेमठाधिपतिभ्यः श्रीश्रीसुगुणेन्द्रतीर्थश्रीपादेभ्यः, श्रीकृष्णपूजापर्यायसिंहासने विराजमानेभ्यः श्रीपलिमारुमठाधीशेभ्यः तपस्विभ्यः श्रीश्रीविद्याधीशतीर्थेभ्यः चरणारविन्दयोः नतिकुसुमाञ्जलिं वितनोमि ।

अस्मिन् शोधकर्मणि मन्मार्गदर्शकाः डा. श्रीधर एन् भट्टमहाभागाः, ये खलु शोधकार्यसमये अनवगतबिन्दून् ज्ञापयित्वा, कार्ये व्यस्ताः सन्तोऽपि अत्यन्तं वात्सल्येन अस्मिन् कर्मणि प्रतिपदं मां सुयोग्यं मार्गदर्शनं विधाय अन्वगृह्णन् । तेषां सगौरवं प्रणतिकार्तज्ञपुष्पं समर्पयामि ।

अस्मिन् शोधकर्मणि सर्वविधसहकारं दत्तवद्भ्यः श्रीमञ्जुनाथेश्वरसंशोधनकेन्द्रस्य संस्थापकेभ्यः पूज्येभ्यः राजर्षि डा.वीरेन्द्र

हेग्गडे महोदयेभ्यः, तथैव संशोधनकेन्द्रस्य निर्देशकेभ्यश्च सगौरवम् प्रणतिकुसुमं वितनोमि ।

शोधकार्यमिदं कर्तुं अवकाशं कल्पितवद्भ्यः तुमकूरुविश्वविद्यालयस्य श्रीमद्भ्यः कुलपतिवर्येभ्यः तथा कुलपतिसचिवेभ्यश्च हार्दं कार्तज्ञं समर्पयामि ।

तथैव तुमकूरुविश्वविद्यालयस्य **Ph.D** विभागाधिकारिभ्यः सर्वेभ्यः हार्दं कार्तज्ञं निवेदयामि ।

एस्.एम्.एस्.पि ग्रन्थालये तथैव राष्ट्रकवि गोविन्दसंशोधनकेन्द्रे अध्ययनार्थम् पुस्तकानां उपयोगं प्राप्तवान् । अतः तेभ्यः ग्रन्थपालकेभ्यश्च हार्दं कृतज्ञतां समर्पयामि ।

संशोधनकार्ये सर्वदा ग्रन्थानां विषयं चारित्रिकविषयञ्च प्रदत्तवद्भ्यः पण्डितेभ्यः श्रीचिप्पगिरि नागेन्द्राचार्येभः तथैव अपूर्वमार्गदर्शनं दत्तवद्भ्यः ज्ञानिश्रेष्ठेभ्यः डा.व्यासनकेरे प्रभञ्जनाचार्येभ्यश्च, प्रशिक्षणं प्रदत्तवद्भ्यः के.आर्.नगरस्य वेदान्तभारतीप्रमुखेभः अपि सगौरवं प्रणतिकुसुमान् व्याहरामि ।

अस्मिन् शोधकार्ये प्रतिपदं सहायं कृतवद्भ्यः मम मित्रेभ्यः श्रीनागभूषण हेच्. एस्. तथा डा.जि.वि.कल्लापुरमहोदयेभ्यः, तथा विविधदेवस्थानस्य अधिकारिभ्यः हार्दं धन्यवादं समर्पयामि ।

अन्ते इदं शोधकार्यं स्वीकृत्य मम मात्रन्तर्गतश्रीजनार्दनः सुप्रीतो भवतु । पूज्यपितृपादेभ्यः सगौरवं प्रणतिकुसुमं समर्पयामि ।

अस्मिन् कार्ये प्रत्यक्षेण–परोक्षेण च सहकारं प्रदत्तवद्भ्यः सर्वेभ्यः सादरं कार्तज्ञं निवेदयामि ।

-------------------------------------

# प्रतिज्ञापत्रम्

"श्रीमध्वविजयमहाकाव्योक्ततीर्थक्षेत्रमीमांसा"

इति शीर्षिकाङ्कितं इमं महाप्रबन्धम् बि.गोपालाचार् इति नामधेयोऽहं स्वकीयेन प्रयत्नेन तद्द्रचनापेक्षिताःसकलसामग्रीःसङ्कलय्य डा.श्रीधर एन् भट्टः, सहप्राध्यापकः, श्रीधर्मस्थळमञ्जुनाथेश्वरमहाविद्यालयः, [स्वायत्तः] उजिरे, एतस्य मार्गदर्शने तुमकूरुविश्वविद्यालयस्य पिहेच्.डि [**Ph.D**] इत्युपाध्यर्थंसमर्पयन्अस्मि ।

अयं महाप्रबन्धः इतःपूर्वं अन्यस्मै कस्मैचिदुपाधये अन्येन केनचित् क्वापि विश्वविद्यालये वा न समर्पित इति प्रतिजाने ।

अनुसन्धाता

बि.गोपालाचार्

उजिरे

२३.११.२०१८

डा. श्रीधर एन्. भट्टः
विद्वान्, शिक्षाशास्त्री, एम्. ए. (संस्कृतम्)
एम्. ए. (आङ्ग) विद्यावारिधिः।
संस्कृताध्ययनसंशोधनविभागाध्यक्षः।
श्री धर्मस्थलमञ्जुनाथेश्वर महाविद्यालयः।
उजिरे - ५७४२४०



**Dr. Shridhara N. Bhat**
Vidwan, B.Ed. MA(Sans) MA (Eng.) Ph.D.
HOD. Dept. of Studies and Research in Sanskrit
SDM College,(Autonomous) Ujire - 574240
Ph: 08256-236826 (R) 236221 (O)
Email: sbujire@rediffmail.com

# प्रमाणपत्रम्

अहमिदं प्रमाणयन् परमहर्षमनुभवामि यत् मदीये मार्गदर्शने श्रीमता बि.गोपालाचार् इत्याख्येन अनुसन्धात्रा भृशं परिश्रम्य समुपलब्धाः समग्रसामग्रीः सङ्कलय्य "श्रीमध्वविजयमहाकाव्योक्ततीर्थक्षेत्रमीमांसा" इत्यङ्कितः शोधप्रबन्धः तुमकूरुविश्वविद्यालस्य Ph.D इत्युपाधये ऐदम्प्राथम्येन समर्प्यते इति ।

विश्वविद्यालयानुदानायोगस्य २००९ तम संवत्सरस्य अधिनियमानुसारं शोधप्रविधिशास्त्रमनुसृत्य रचितोऽयं शोधप्रबन्धः Ph.D इत्युपाधये सर्वथा समर्पणयोग्य इति अयं शोधप्रन्बधः परीक्षणाय प्रेश्यते ।

**इत्थम्**

**मार्गदर्शकः**

**डा.श्रीधर एन् भट्टः**

**श्रीधर्मस्थळमञ्जुनाथेश्वरसंशोधनकेन्दम्**

**[तुमकूरुविश्वविद्यालयेन मानितम्]**

**[स्वायत्तः] उजिरे, कर्नाटक ५७४२४०**

# प्रतिज्ञापत्रम्

"श्रीमध्वविजयमहाकाव्योक्ततीर्थक्षेत्रमीमांसा"

इति शीर्षिकाङ्कितः अयं महाप्रबन्धः स्वकीयेन प्रयत्नेन निर्मितः प्रबन्धः । अस्मिन् संशोधने अथवा महाप्रबन्धे कृतीनां चौर्यं न कृतं इति प्रतिजाने

अनुसन्धाता
बि.गोपालाचार्
उजिरे
२३.११.२०१८

मार्गदर्शकः
डा.श्रीधर एन् भट्टः
श्रीधर्मस्थळमञ्जुनाथेश्वरसंशोधनकेन्दम्
[तुमकूरुविश्वविद्यालयेनमानितम्]
[स्वायत्तः] उजिरे, कर्नाटक ५७४२४०

# विषयसूची

# सङ्केताक्षरसूची

| | | | |
|---|---|---|---|
| 1. | मध्व.वि. | – | मध्वविजयः |
| 2. | प्र.न. | – | प्रमेयनवमालिका |
| 3. | ई.उ. | – | ईशावास्योपनिषत् |
| 4. | क.उ. | – | कठोपनिषत् |
| 5. | त.उ. | – | तत्त्वोपदेशः |
| 6. | भ.गी. | – | भगवद्गीता |
| 7. | म.भा. | – | महाभारतम् |
| 8. | म.भा.ता.नि | – | महाभारततात्पर्यनिर्णयः |
| 9. | मा.भा | – | माध्वभाष्यम् |
| 10. | मुं.उ. | – | मुण्डकोपनिषत् |
| 11. | वे.मं. | – | वेदान्तमञ्जूषा |
| 12. | अ.म.च. | – | अणुमध्वचरितम् |
| 13. | ल.सू | – | लक्ष्मीसूक्तम्. [अम्भ्रणीसूक्तम्] |
| 14. | यु.म. | – | युक्तिमल्लिका |
| 15. | रा.वें.स्तो. | – | राघवेन्द्रस्तोत्रम् |
| 16. | प्र.प. | – | प्रमाणपद्धतिः |
| 17. | ದ.ಕ.ದೇ. | – | ದಕ್ಷಿಣ ಕನ್ನಡದ ದೇವಾಲಯಗಳು |
| 18. | ऋ.भा. | – | ऋग्भाष्यम् |
| 19. | ತು.ನಾ.ಮ.ಪ. | – | ತುಳುನಾಡಿನ ಮಧ್ವಪರ್ಯಟನೆ |
| 20. | श्री.वा.रा.य. | – | श्रीवादिराजयतिः |

21. सं.प. – सम्प्रदायपद्धतिः

22. षट्.उ.भा. – षट्प्रश्नोपनिषद्भाष्यम्

23. यु.म. – युक्तिमल्लिका

24. भा.ता.नि. – भागवततात्पर्यनिर्णयः

25. ऋ.वे. – ऋग्वेदः

26. ती.प्र. – तीर्थप्रबन्धः

27. ಭಾ.ಸ.ಶ್ರೀ.ವಾ.ಗು. – ಭಾವಿಸಮೀರ ಶ್ರೀಮದ್ವಾದಿರಾಜ ಗುರುಸಾರ್ವಭೌಮರು

28. प.दी. – पदार्थदीपिका [वेदाङ्गतीर्थीया]

29. कृष्णा.म. – कृष्णामृतमहार्णवः

30. छ.आ. – छलारी आचार्यः

31. ದ್ವೈ.ವೇ.ವಾ.ಇ. – ದ್ವೈತವೇದಾಂತ ವಾಙ್ಮಯ ಹಾಗೂ ಇತಿಹಾಸ. ಸಂಪುಟ–1

32. अ.व्या. – अनुव्याख्यानम्

33. भा.व. – भागवतम्

34. वि.प. – विश्वपतीयम्

35. त.प्र. – तत्त्वप्रकाशिका

36. भा.प्र. – भावप्रकाशिका

37. ब्र.पु. – ब्रह्माण्डपुराणम्

38. स.भा.वि. – सरसभारतीविलासः

39. म.भा.शा.प. – महाभारतशान्तिपर्वम्

40. म.भा.श.प. – महाभारतशल्यपर्वम्

41. स्क.का.ख. – स्कन्दपुराणकाशीखण्डः

42. गु.च.मृ – गुरुवरचरितामृतम्

43. वा.गु.च. – वादिराजगुरुचरितम्



# उपोद्धातः

**न माधवसमो देवो न च मध्वसमो गुरुः ।**

**न तद्वाक्यसमं शास्त्रं न च तस्य समः पुमान्** [यु.म.1.] इत्येतद्वचनं हरि–गुरोः महत्वं प्रतिपादयति । जीवने हरि–गुरोः परमानुग्रहेणैव उन्नतिं प्राप्नुमः।

**यस्य देवे पराभक्तिः यथा देवे तथा गुरौ ।**

**तस्यैतेऽकथिता ह्यर्थाः प्रकाशन्ते महात्मनाम् ॥** इति वचनं सुप्रसिद्धम् । गुरुभक्तिरेव हरौ भक्तिं जनयति । गुरुप्रसादजाः विद्याः एव फलिष्यन्ति इत्यपि शास्त्रेषु निर्णितम् । अत्र कर्णः निदर्शनरूपेण स्मर्तव्यः । अत एव श्रीनारायणपण्डिताचार्यः श्रीमध्वविजयस्य प्रारम्भे

**मुकुन्दभक्त्यै गुरुभक्तिजायै सतां प्रसत्त्यै च निरन्तरायै ।**

**गरीयसीं विश्वगुरोर्विशुद्धां वक्ष्यामि वायोरवतारलीलाम् ॥** [मध्व.1.5] इति गुरुभक्तिमहिमां अवोचत् । अतः गुरुभक्तेः प्रवृध्यर्थं श्रीमध्वविजयमहाकाव्यम् सदा संसेव्यम् ।

भारतवर्षं अनेकदर्शनानां जन्मभूमिः । ज्ञानधनं सर्वदा मानवानां प्रमुखं उन्नतिसाधनं भवति । सर्वसिद्धीनां परमसाधनम् च । एतदतिरिच्य नान्यत्साधनं विद्यते अस्मिन्जगति । तत्रापि परविद्या सर्वासां विद्यानां मूलं भवति । परविद्यया रहिताः विद्याः निर्जीवकायवद्विभान्ति । अपि च परविद्या एव भगवतः परिचयं कारयति । भगवतः साक्षात्कारोपि परविद्यया एव । अत एव "**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते**"[भ.गी.4.38] "**अध्यात्मविद्या विद्यानाम्**" [भ.गी] "**तमेवं विदित्वा अमृत इह भवति**" इत्यादिवचनैः परविद्यायाः महत्वं शास्त्रेषु वर्णितम् ।

कलिकालबलेन महर्षेः गौतमस्य शापादपि [1] तत्वज्ञानप्रपञ्चः अन्धकारे अपतत् । देवानां मुनीनां च प्रार्थनया भगवान् व्यासरूपेण पराशरात्

सत्यवत्यां अजायत । करुणया सकलशास्त्रार्थनिर्णयाय ब्रह्मसूत्राणि चकार [2] । तेन साधनमार्गः सम्यक् चकास । भगवतः व्यासस्य हार्दं प्रकटीकर्तुं भगवदाज्ञया अवतर्तुं वायुः सङ्कल्पयामास । लोकेऽस्मिन् जीवानां कल्याणार्थं अशेषकल्याणविशिष्टस्य भगवतः श्रीहरेः स्वरूपं बोधयितुं मुख्यप्राणः भुवौ "आनन्दतीर्थ" इति नाम्ना अवातरत् ।

तौळवमण्डले लिकुचवंशः विद्वद्वंशः । संस्कृतवाङ्मयक्षेत्रे तेषां योगदानं महत्वपूर्णम् । तद्वंशीयाः सर्वे श्रीमध्वाचार्यस्य गाथामेव अवर्णयन् । श्रीमध्वाचार्यस्य जीवनगाथा तु मन्त्रवर्णैः अनुवर्णनीया [3] । तां समग्रजीवनगाथां एते पण्डितवर्याः काव्यरूपेण स्तोत्ररूपेण च प्रतिपादितवन्तः। तत्र च कविकुलतिलकस्य श्रीत्रिविक्रमपण्डितवर्यस्य तृतीयः पुत्रः पण्डितवर्यः श्रीनारायणपण्डिताचार्यः । अयमेव वायोः अवतारत्रयलीलां षोदशसर्गात्मके मध्वविजये महाकाव्ये वर्णयामास [4] ।

**गमनासनसङ्कथादिलीलाः**

**स्मृतिमात्रेण भवापवर्गदात्रीः ।**

**कथमप्यमराः प्रपञ्चयेयुः**

**ननु मध्वस्य न मादृशोऽल्पबोधाः** [मध्व.16.42] इति जगद्गुरोः श्रीमध्वाचार्यस्य महिमामहत्वस्य परिचयं काव्ये करोति । जन्मभूमिं पाजकं आरभ्य अवतारपरिसमाप्तिपर्यन्तं मध्वसम्पर्कभूतानि क्षेत्राणि अनेकानि सन्ति । **"पांसवोऽस्मान् पुनन्तु"** कवेः पिता श्रीत्रिविक्रमपण्डितः उदघोषयत् ।

अयमेव महाभागः आचार्यस्य अवतारत्रयं साक्षात् संददृशे । पितुः निर्देशानुसारं श्रीनारायणपण्डितः मध्वमहिमां काव्ये सञ्जगृहे । काव्योक्तानि

मध्वसम्पर्कभूतानि क्षेत्राणि महामहिमसम्पन्नानि । तानि पापहराणि क्षिप्रप्रसाददानि च ।

अत एव भक्तैः तानि गन्तव्यानि संसेव्यानि च । सुदैववशात् काव्यस्यास्य आधारेण श्रीमध्वाचार्यस्य विषये ऐतिहासिकानि प्रमाणानि उपलभ्यन्ते । श्रीमध्वविजयमहाकाव्ये निर्दिष्टानि अनेकानि क्षेत्राणि भारतदेशे इदानीमपि विद्यन्ते। परन्तु सम्पर्काभावात् कानिचन क्षेत्राणि जनमानसात् तिरोहितप्रायाणि । कानिचन क्षेत्राणि न सन्त्येव ।

मध्वविजये पञ्चदशसर्गे चत्वारिंशदधिकशततमे श्लोके "ग्रामे वातैः पाविते काण्वतीर्थैः" इति श्लोके ग्रामविशेषस्य उल्लेखः वर्तते । अयं ग्रामः प्रादेशिकभाषायां ओर्पाडि [ಒರ್ಪಾಡಿ] इति नाम । कालानन्तरे वोर्काडि [ವೊರ್ಕಾಡಿ] इति इदानीं नाम । कासरगोडुमण्डले उत्तरे भागे वर्तते अयं ग्रामः । तत्र तस्मिन् काले श्रीमहाविष्णुदेवालयः आसीत् । तत्रैव श्रीमध्वाचार्यः चातुर्मास्यव्रतं स्वीचकार । तत्रैव तत्त्वोद्योतग्रन्थं रचयामास । परन्तु दुर्दैववशात् कालान्तरे सः देवालयः नष्टः । परमतीयानां आक्रमणेन ध्वस्तः अभवत् । इतिहासज्ञाः शासनानुसारेण स्थळस्य अन्वेषणं अकुर्वन् । स्थळशोधनसमये इतिहाससूचकानि अपूर्ववस्तूनि तत्र अलभन् । तदनुसारं महाकाव्यस्यास्य आधारेण च स्थळनिर्धारं अकुर्वन् । श्रीपलिमारुमठाधीशानां श्री श्री विद्याधीशतीर्थानां मार्गदर्शने भव्यदेवालयं चक्रुः [5] । सुदैववशात् इतिहासे वैभवं अनुभूतस्य देवालयस्य दर्शनं इदानीं भवति ।

तथैव "चेम्नाडु" इति [शम्भुनाडु] मध्वविजयोक्तः प्रदेशविशेषः । तत्र शिवालयः आसीत् । तत्रैव श्रीमध्वाचार्यः अपालाशब्दस्य निर्वचनं अकरोत् । परन्तु दुर्दैवात् देवालयदर्शनं इदानीं न भवति । तत्र देवालयस्य स्थाने

मोहम्मदीयानां प्रार्थनामन्दिरं आक्रमितम् । अन्वेष्टुं गमनमपि दुःसाध्यम् । मध्वविजयोक्तक्षेत्रं निरस्तम् परकीयैः ।

उडुपि–कापुमुख्यमार्गे पाङ्गळग्रामः अस्ति । तत्र श्रीजनार्दनदेवालयः वर्तते। इदानीं यत्रास्ति पूर्वं तत्र नासीत् । पूर्वं एकस्मिन् स्थळविशेषे सः देवालयः आसीत् इति इतिहासज्ञाः ऊचुः । तथै अष्टमङ्गळप्रश्नेऽपि इयमेव सूचना अभिव्यक्ता । तत्र वासुदेवः [श्रीमध्वाचार्यस्य पूर्वाश्रमनाम] स्वल्पकालं स्थित्वा भगवन्तं ध्यायति स्म । पाजकतः गुरुकुलमार्गे पाङ्गळग्रामः वर्तते । अत एव वासुदेवः गमनागमने अत्र आगच्छति स्म । परन्तु इदानीं देवालयः स्थळान्तरितः। अत्र अश्वत्थवृक्षः वर्तते । प्रदेशः अन्यस्य अधीने विद्यते । भावुकाः सज्जनाः अपि अस्मिन् विषये अज्ञानिनः ।

कासरगोडु–वर्काडि मार्गे मञ्जिनाडि इति ग्रामः वर्तते । अनतिदूरे एव बल्लाळमहोदयस्य गृहं अस्ति । श्रीमध्वाचार्यः तत्कालीनबल्लाळाय अनुग्रहरूपेण ताण्डवकृष्णं अदात् । तादृशस्य साधकस्य गृहस्य च परिचयः नास्त्येव ।

कर्नाटकस्य विजापुरनगरस्य अनतिदूरे "मुत्तिगे" इति ग्रामः वर्तते । श्रीमध्वाचार्यः तत्रस्थं श्रीलक्ष्मीनरसिंहं सन्दर्शयामास इति ताम्रपत्रेण ज्ञायते । परन्तु अयमपि विचारः जनमानसे नोदितः ।

स्वयंव्यक्तवैष्णवक्षेत्रेषु श्रीमुष्णं एकम् । तत्र श्रीवराहस्वामीदेवालयः । श्रीमुष्णक्षेत्रे देवालयस्य अनतिदूरे श्रीमध्वाचार्यः तटाकनिर्माणं चकार । दण्डतीर्थम् इत्येव व्यपदिशन्ति जनाः । परन्तु जनाः एनं विषयं न जानन्त्येव । देवालयस्य स्तन्भे श्रीमध्वाचार्यस्य मूर्तिः विराजते ।

भूवैकुण्ठः इति प्रख्याते तिरुमलक्षेत्रे श्रीमध्वाचार्यः चातुर्मास्यव्रतं स्वीचकार । यस्मिन् प्रदेशे उवास इत्यादिविचारमपि न जानन्ति ।

एवमेव अनेकानि क्षेत्राणि जनसदागतिसूचितवर्त्मना प्रयासेनैव अन्वेष्टव्यानि भवन्ति । केषुचन देवालयेषु ग्रन्थोक्तविवरणं समर्थयितुं शासनं ताम्रपत्रं वा नास्ति । अर्चकाः अपि न जानन्ति । देवस्थानस्य अधिकारिणः अपि अस्मिन् विषये अज्ञानिनः । तत्र सर्वत्र ग्रन्थाधारेण वयमेव विवरणं दत्वा जागृतवन्तः । जानन्तोऽपि केचन धाष्र्ट्यात् नाङ्गीकुर्वन्ति । जनान् न बोधयन्ति च। अत एव **"द्वयमपि तत्स्वभावतन्त्रम्"** [मध्व.16.12] इति कवेः अभिप्रायः ।

जगद्गुरोः श्रीमध्वाचार्यस्य अलौकिकचेष्टायाः साक्षीभूतानि तानि क्षेत्राणि इति तु भावुकानाम् अभिमानास्पदविषयः । अष्टशतमानात् वर्षात् पूर्वं मध्वसम्पर्कभूतानां पावनप्रदेशानां परिचयपूर्वकं पुनः जनमानसपटले स्थापनार्थम् अयं प्रयासः । राजाश्रये वैभवम् प्राप्तानां प्रदेशानां ग्रन्थोक्तरीत्या सविवरणं दत्वा अस्मिन् महाप्रबन्धे सम्पादितमस्ति । ये प्रदेशाः इदानीमपि ज्ञातुम् असाध्याः तेषामपि प्रदेशानां सचित्रं सविवरं सङ्गृहीतम् । प्रबन्धस्य अस्य साहाय्येन ग्रन्थोक्तानां प्रदेशानां सञ्चारः सुखकरो भवेत् इति अस्माकं भावना । इदानीन्तनयात्राक्रमस्तु यत्र सौकर्यं अस्ति तत्रैव गमनम् इति ।

परन्तु पूर्वजाः विशिष्टसन्निधानं यत्रास्ति तत्रैव यात्रां विधास्यन्ति स्म । तादृशक्षेत्राणां पांसवः एव अस्मान् पुनन्ति ।

महापुरुषाः यात्रां कृत्वा क्षेत्राण्येव पवित्राणि कुर्वन्ति । "तीर्थीकुर्वन्ति तीर्थानि" इति भागवतस्य वचनम् सुप्रसिद्धम् ।

अत एव मध्वविजयकाव्योक्तदिशा

**“श्रीमध्वविजयमहाकाव्योक्ततीर्थक्षेत्रमीमांसा”** इति महाप्रबन्धं सम्पादितुमुत्सहे ।

**“उच्चावचा येन समस्तचेष्टाः**

**किं तत्र चित्रं चरितं निवेद्यम् ।**

**मनो विशुध्यै चरितानुवादः”**[मध्व.1.4.] इति कवेः अभिप्रायं अनुसृत्य तीर्थक्षेत्राणां चरितं सम्पादयियुं उद्युक्तोऽस्मि । मन्दबुद्धौ मयि शब्दसमूहः परिमितः। अपरिमिता च महिमा जगद्गुरोः । अतः गुणाढ्याः कारुण्यपूर्णाः भवन्तः मम दोषराशिं क्षाम्यन्तु इति विज्ञापयामि ।



# प्रथमोऽध्यायः

वेदमार्गः–भारतीयदर्शनानि–दर्शनशास्त्रस्यप्रभेदाः–
वेदान्तदर्शनम् भाष्यकाराः – द्वैतवेदान्तस्य विचारः–
भगवतापरशुरामेणनिर्मितप्रदेशः–शिवळ्ळिग्रामपद्धतिः–
शिवळ्ळिकुलम्–तौळवमण्डलस्य विद्वत्परम्परा–
मध्वकथा–मध्वाचार्यस्ययोगदानम्–लिकुचकुलम्–
कविपरिचयः – श्रीमध्वविजयमहाकाव्यम् ॥

# प्रथमोऽध्यायः

## वेदमार्गः

श्रीनारायणपण्डितः श्रीमध्वविजयमहाकाव्ये जगद्गुरोः श्रीमध्वाचार्यस्य गाथां वर्णयामास ।

**"विज्ञानभानुमति कालबलेन लीने**
**दुर्भाष्यसन्तमससन्तातितो जनेऽन्धे ।**
**मार्गात् सतां स्खलति खिन्नहृदो मुकुन्दं**
**देवाश्चतुर्मुखमुखाः शरणं प्रजग्मुः"** [मध्व.2.1]

इति श्रीमध्वविजये कलिकालबलेन विषण्णानां सज्जनानां स्थितिः निरूपिता । तेषामुद्धरणाय देवानां प्रार्थनया भगवदादेशेन च वायुः अवतीर्णः इति अवतारप्रयोजनं आह । श्रीमध्वाचार्यस्तु तत्ववादसंस्थापकः । भारतस्य आचार्यत्रयेषु अन्यतमः । आचार्यः कर्नाटके अवातरत् । अत एव "अस्माकं प्रान्तीयः" इति विशेषाभिमानविषयः । आचार्यस्य सम्पर्कभूतानां क्षेत्राणां वर्णनं अस्मिन् प्रबन्धे क्रियते । तत्पूर्वं दर्शनचिन्तनं आवश्यकम् । अतः भारतीयतत्वदर्शनानां परिचयः आदौ क्रियते ।

सर्वेऽपि प्राण-भृत्प्रपञ्चः स्वभावत एव स्वेष्टं प्राप्तुं स्वानिष्टं परिजिहीर्षुश्च यतन्तीति सुनिश्चितमिदं प्रमेयम् । विदितमेव सर्वैः विद्वद्भिः यत् धर्मार्थकाममोक्षेषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थ[6] इति । तथाऽपि स्वार्थपरतया जीवाः सर्वे "सुखमेव मे स्यात् दुःखं मनागपि मा भूत्"[7]इत्येव सदा चिन्तयन्ति । परन्तु एतत्तु असाधुसम्मतं चिन्तनम् । सर्वेऽपि जीवाः शाश्वतसुखान्वेषणे एव सदा तत्पराः भवेयुः । परन्तु सर्वत्र सुखदुःखयोः

तारतम्यभावः विद्यते । जीवानां दुःखनिवारणायैव श्रुतयः प्रवर्तन्ते । [8]जीवानां दुःखपरिहारायैव वेदाः प्रवृत्ताः ।

**वेदेन पञ्चरात्रेण भक्त्या यज्ञेन चैवहि ।**

**दृश्योऽहम् नान्यथा दृश्यः वर्षकोटिशतैरपि ॥**

इति अनुव्याख्याने श्रीमध्वाचार्यः वराहपुराणस्य वचनमुद्धृत्य वेदमार्गस्य महत्वम् प्रत्यपादयत् । वेदोक्तमार्गमनुसरन्तः स्वकर्मानुष्ठानरताः एव जीवाः मुक्ताः भवेयुः[9] इति वैदिकवाक्यानाम् निर्णयः । मोक्षसम्प्राप्तिश्च गुरूपसत्या वेदशास्त्रार्थश्रवण–मनन–निधिध्यासनजन्य–भगवत्साक्षात्कारजन्य–भगवत्प्रसादजन्य–परमभक्तिप्राप्या[10]इति शास्त्रनिर्णयः । तत्साधनाय तं अनुष्ठाय ज्ञानमेव संपादनीयं इति सर्वेषु वेदेषु निखिलेषु शास्त्रेषु निरर्गलः उद्घोषः । पञ्चभेदात्मके प्रपञ्चे वर्तमानानि सर्वाण्यपि वस्तूनि ईश्वराधीनानि । ईशावास्यानि च । [11] सर्वेऽपि जीवाः ज्ञानपिपासवः ज्ञानार्थं योग्यं उपदेष्टारं अन्विच्छन्तः आसन् । देवाधिदेवानां प्रार्थनया भगवान् वेदव्यासः उत्सन्नं वेदं व्यञ्जयन् चतुर्धा व्यभजत् [12]। वेदानां विभागकरणादेव वेदव्यासः [13]इति अन्वर्थं नाम । वेदव्यवस्थां कृत्वा वेदार्थनिर्णयाय ब्रह्मसूत्राणि[14] व्यरचयत् । एवं महाभारतं अष्टादशपुराणानि च चकार । [15]

## भारतीयदर्शनानि

भारतीयतत्वशास्त्रेषु तावद्दरीदृश्यते वैविध्यम् । अत एव दृश्यन्ते बहूनि दर्शनानि । श्रूयन्ते च कानिचित् । वैचारिकस्वातन्त्र्यमेव अत्र कारणम् । नेतरत् । स्वातन्त्र्यं पश्यामो वयं पाश्चात्यतत्वशास्त्रेषु । ये च पाश्चात्याः तत्र प्रायतन् तेषु केचन राजशासनेन मदान्धैर्वा लोकैर्दण्डिताः लोकोत्तरं जग्मुः ।

अन्ये केचन विचारमात्रावशिष्टाः समभवन् । अपरे केचन सविचाराः एव विनष्टाः । भारतीयतत्वशास्त्राणां कथा तु एतद्विलक्षणा ।

"दर्शनम्" इत्यस्य शब्दस्य आत्मसाक्षात्कारः [16]इत्यर्थः । दृशिर्–प्रेक्षणे इति धातोः भावार्थे ल्युटि "दर्शनम्" इति पदं निष्पन्नम् । यद्यपि दर्शनशब्दस्य साक्षात्कारः इत्यर्थः । तथापि याज्ञवल्क्यस्मृतिषूपनिषत्सु अस्य शब्दस्य "सम्यग्दर्शनम्" "आत्मज्ञानं" इति प्रसिद्धम् । स एव आत्मसाक्षात्कारार्थः दर्शनपदेन भारतीयदर्शशास्त्रेषु अभिप्रेतः । परन्तु आत्मा बाह्यप्रमेयवत् उपलब्धियोग्यः न भवति । अतः आत्मनः उपलब्ध्यर्थं श्रवणमननादीनि साधनानि निरूपितानि । तान्यपि "दृश्यन्ते अनेन इति" करणव्युत्पत्या तत्प्रतिपादकानि च शास्त्राणि दर्शनपदवाच्यानि भवन्ति ।

तस्माच्छृतौ मैत्रेयीयाज्ञवल्क्यसंवादे "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यः" इति निरूपितम् । मोक्षतत्वविविदिषूणां श्रुतिवाक्यश्रवणानन्तरं आत्मसाक्षात्कारोपाये प्रश्नः समुदेति । तदानीमेव दर्शनशास्त्रानुसारं मननं क्रियते । अत एव आत्मसाक्षारार्थं सर्वाण्यपि दर्शनानि प्रवृत्तानि । अनेनैव मार्गेण एतानि दर्शनानि पाश्चात्यदर्शनेभ्यः सम्पूर्णतया विभिन्नानि भवन्ति । परन्तु केचन भारतीयदर्शनशास्त्रप्रवर्तकानां उद्देशं अज्ञात्वा व्युत्पत्तिं अन्यथा [पाश्चात्यरीत्या] प्रतिपादयन्ति । अनेन दर्शनशास्त्रविरोधः आपद्यते । अत एव भारतीयदर्शनानि पाश्चात्यदर्शनेभ्यः सम्पूर्णतया विभिन्नानि ।

## दर्शनशास्त्रस्य उद्देश्यम्

यदि जगति दुःखं न स्यात् तर्हि तदपघातार्थं कोऽपि न प्रयतेत । तथा हि संख्याशास्त्रे –"दुःखत्रयाभिघातात् जिज्ञासा तदपघातके हेतौ" इति निरूपितम् ।

जागतिकदुःखजाले निपतिताः जीवाः स्वकर्मसन्ततेः उपशमनार्थं शास्त्रमार्गं आश्रयन्ते । अन्धकारे निपतितस्य यथा दीपं मार्गदर्शनं करोति तथैव शास्त्राण्यपि स्वप्रज्वलनेन सन्मार्गं प्रापयति । शास्त्राणि मानवानां नेत्राणीव । एतदेव शास्त्रस्य चरमं लक्ष्यम् [18] ।

## दर्शनशास्त्रस्य भेदाः

सकलशास्त्रशिरःस्थानीयाः कामदुघाः श्रुतयः क्वचित् क्वचित् स्पष्टार्थविशिष्टाः भवन्ति यत्र मन्दधियोपि प्रभवन्ति अर्थावगमे । क्वचिच्च गूढार्थविशिष्टाः भवन्ति यत्र कृतभूरिपरिश्रमः विद्वांसः एव प्रवेष्टुं अर्हन्ति । क्वचिदपि गूढतरार्थविशिष्टाः यत्र श्रवण–मनन–निदिध्यासनरताः आत्मारामाः साक्षात्कृतधर्माः महर्षयः ध्यानेनैव परिपश्यन्ति अर्थजातम् । साधारणतः यत्र गूढार्थविषयः तत्र पुरुषमतिवैश्वरूप्यात् संशयः भवति । यत्र तु गूढतरार्थविषयः तत्र सुतरामेव संशयः भवति । अत एव तत्तत्स्थलेषु वैमत्यानि [19]जायन्ते । यथार्थतः सर्वाण्यपि विमतानि निष्कर्षे एकमेव पुरुषार्थं अभिप्रयन्ति । श्रीशङ्कराचार्यकृतसर्वसिद्धान्तसङ्ग्रहे लोकायतार्हतबौद्धवैशेषिकन्यायमीमांसासांख्यपातंजलव्यासवेदान्ताख्यानां दशसंख्यानां दर्शनानां नामानि गृहीतानि । अनन्तरं जिनदत्तसूरिकृते “षड्दर्शनसमुच्चये” जैनमीमांसाबौद्धसांख्यशैवनास्तिकानीति षड्दर्शनशास्त्राणि निरूपितानि । अपि च अर्हतप्रवरेण श्रीभद्रसूरिणा बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयाख्यानि षड्दर्शनानि प्रदर्शितानि । अनन्तरमागतेन यतिप्रवरेण श्रीमन्माधवाचार्यपादेन विरचिते “सर्वदर्शनसङ्ग्रह”इति ग्रन्थे चार्वाक–बौद्ध–जैन–रामानुज–पूर्णप्रज्ञ–कुलीश–पाशुपत–शैव–

प्रत्यभिज्ञा–रसेश्वर–वैशेषिक–नैयायिक–जैमिनि–पाणिनि–सांख्ययोग–शंकराख्यानि पञ्चदशसंख्याकानि दर्शनशास्त्राणि  सन्ति इति प्रदर्शितम् । परन्तु रुचीनां व्यैचित्र्यात् अनेके मार्गाः सृष्टाः । अत एव  ऋग्वेदे अपि एतत्प्रतिपादितम् – "एकं सद्विप्राः बहुधा वदन्ति" इति । दर्शनशास्त्रस्य भेदप्रसंख्याने अनेकानि विमतानि वरीवर्तन्ते ।

यद्वा भवतु स्थूलतः आस्तिकनास्तिकभेदेन भारतीयदर्शनस्य परम्पराद्वैविध्यं आतनोति । परलोकास्तित्वमङ्गीकुर्वाणाः आस्तिकाः[20] । परलोकं नास्तीति वदन्तः नास्तिकाः इति शब्दानुशासनकोविदाः समभिव्याहरन्ति । परन्तु अनेन व्युत्पत्तिबलेन किमपि साधयितु न शक्यते । अत एव इमं व्युत्पत्तिलब्धमर्थं विहाय प्रवृत्तिनिमित्तस्यैव अर्थस्य मर्यादां साधयन्ति भारतीयदर्शनशास्त्रकाराः ।  तथा च मनुः "नास्तिको वेदनिन्दकः" इति उक्तवान् । तेन इदानीं नास्तिकास्तिकशब्दयोः व्याख्या सुस्पष्टा अभवत् । वेदप्रामाण्यं अङ्गीकृत्य ये स्वमतं उपस्थापयन्ति ते एव आस्तिकपदवाच्याः भवन्ति । ये तु वेदप्रामान्यं अनङ्गीकृत्य स्वमतं उपस्थापयन्ति ते एव नास्तिका इति अभिधीयन्ते ।  तस्मात् वेदप्रामाण्यं अङ्गीकुर्वन्ति सांख्ययोगन्यायवैशेषिकपूर्वोत्तरमीमांसादर्शनानि प्रधानतया आस्तिकत्वेन परिगण्यन्ते । तथैव वेदप्रामाण्यं अनङ्गीकुर्वन्ति जैनचार्वाकबौद्धदर्शनानि नास्तिकदर्शनत्वेन प्रथितानि ।

## वेदान्तदर्शनम्

सर्वेष्वपि वैदिकदर्शनेषु वेदान्तदर्शनस्य स्थानं अतीव महत्वपूर्णम् । वेदान्तो नाम "उपनिषन्निर्णय"इति यदुक्तं तत्तु तच्छास्त्राध्ययनावसरे प्रेक्षावतां मनांसि सम्यक् स्पृशति । वेदान्त इति शब्दः उपनिषत्सु असकृत् प्रयुक्तः ।

वेदानां अन्तः वेदान्तः [21] इत्यस्मात् ज्ञायते यत् वेदान्तशब्दः सर्वथा उपनिषत्स्वेव मुख्यः। तदधिकृत्य मुख्यतः द्वैतमद्वैतञ्चेति मतद्वयमवलोक्यते । तत्र अद्वैतवादिनस्तु ब्रह्मणः अतिरिक्तं वस्तु न किञ्चिदस्तीति ब्रह्माद्वैतवादं उपस्थापयन्ति ।

मध्वविजये **"अहं स्वयं ब्रह्म न किञ्चिदस्ति मत्**

**परं विजृम्भेत यदा स्फुटं चितिः ।**

**इतीह मायासमयोपादितम्**

**निरन्वयं सुव्रत मा स्म विश्वसीः ॥**" [मध्व.4.10] इति वर्णितम्
।

द्वैतवादिनस्तु ब्रह्मजीवजगतां पारस्परिकभेदं उपस्थापयन्ति –

**"यथाज्ञो जीवसंघश्च प्राणादेश्च नियामकः ।**

**तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ"** इति सर्वदर्शनसङ्ग्रहे प्रतिपादितम् । अन्येऽपि वेदान्तदर्शनस्य बहवः सम्प्रदायाः सन्ति । सर्वेषां वेदान्तसम्प्रदायप्रवर्तकानां आचार्याणां नामानि मतानि च क्रमशः अत्र निर्दिश्यन्ते । तत्र च यद्यपि भगवता बादरायणेन ब्रह्मसूत्राणि प्रणीतानि इत्यस्मिन् विषये न कापि विचिकित्सा अस्ति । तथापि सर्वेषु उपलभ्यमानेषु भाष्येषु सूत्राणां अधिकरणानाञ्च संख्याविषये महान् विवादः आचार्येषु दृश्यते ।

तथा हि –

आचार्याणां मतानि भाष्याणि सूत्राणि अधिकरणानि च प्रदत्तानि ।

1. श्रीमच्छङ्कराचार्याः अद्वैतम् शारीरकभाष्यम् पञ्चपञ्चाशदुत्तरपञ्चशतम् एकोनद्विशतम्[555] [199]

2. श्रीमन्मध्वाचार्याः द्वैतम् पूर्णप्रज्ञभाष्यम् चतुष्षष्ट्युत्तरपञ्चशतम् त्रयोविंशत्युत्तरद्विशतम् [564] [223]
3. श्रीमद्रामानुजाचार्याःविशिष्टाद्वैतम् श्रीभाष्यम् पञ्चचत्वारिंशदुत्तरपञ्चशतम् षष्ठ्यधिकैकशतम् [545] [160]
4. श्रीमद्भास्कराचार्याः भेदाभेदम् भास्करभाष्यम् षट्पञ्चाशदुत्तरपञ्चशतम् [556]
5. श्रीमन्निम्बकाचार्याः द्वैताद्वैतम् वेदान्तपारिजातभाष्यम् एकोनचत्वारिंशदधिकपञ्चशतम् एकषष्ट्युत्तरैकशतम् [549] [161]
6. श्रीमच्छ्रीकण्ठाचार्याः शिवविशिष्टाद्वैतम् शैवभाष्यम् चतुश्चत्वारिंशदधिकपञ्चशतम् द्व्यशीत्यधिकैकशतम् [544] [182]
7. श्रीमच्छ्रीपत्याचार्याः वीरशिवविशिष्टाद्वैतम् श्रीकरभाष्यम् –
8. श्रीमद्वल्लभाचार्याः शुद्धाद्वैतम् अणुभाष्यम् चतुःपञ्चाशदधिकपञ्चशतम् एकसप्तत्युत्तरैकशतम् [554] [171]
9. श्रीमद्विज्ञानभिक्ष्वाचार्याः अविभागाद्वैतम् विज्ञानामृतभाष्यम् षट्पञ्चाशदुत्तरपञ्चशतम् [556]
10. श्रीमद्बलदेवाचार्याः अचिन्त्यभेदाभेदम् गोविन्दभाष्यम् द्विषष्ट्युत्तरपञ्चशतम् [562] परन्तु इदानीं विशेषतः द्वैतस्य अद्वैतस्य विशिष्टाद्वैतस्य च प्रचारः प्रायः बहुलतया दृश्यते ।

## द्वैतवेदान्तस्य विचारः

ज्ञानपिपासवः सर्वे सज्जनाः तत्वज्ञानार्थं योग्यं उपदेष्टारं गुरुं अन्विच्छन्तः आसन् । तेषां उद्धरणाय भगवान् वेदव्यासः उत्सन्नं वेदं व्यञ्जयन् चतुर्धा व्यभजत् । वेदानां विभागकारणादेव तस्य वेदव्यासः अन्वर्थं नाम बभूव । परमकारुणिकः श्रियःपतिः मुमुक्षूणां सज्जनानां हेयोपादेयवस्तुविवेचनाय अज्ञानान्यथाज्ञानविपरीतज्ञानदुरीकरणाय निखिलापेक्षितमोक्षानन्दप्राप्तये वेदव्यवस्थां कृत्वा वेदार्थनिर्णयाय ब्रह्मसूत्राणि चकार । अत एव "वेदार्थनिर्णायकन्यायग्रथनात्मकत्वं सूत्रत्वम्"[22] इति सूत्रलक्षणं कथितम् । यदप्युक्तं सूत्रलक्षणम् – **"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।**

**अस्तोभं अनवद्यञ्च सूत्रं सूत्रविदो विदुः"** ॥ इति ।

एवं ब्रह्मसूत्राणि तथा महाभारतम् अष्टादशपुराणानि च विरचय्य सर्वेषु प्राणिषु ज्ञानं संस्थाप्य निर्लिप्तस्सन् भगवान् व्यासः विरराज । अस्मिन् विषये प्रमाणम् स्कान्दे –

**"नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।**
**किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेखिलम् ॥**
**गौतमस्य ऋषेः शापात् ज्ञाने त्वज्ञानतां गते ।**
**सङ्कीर्णबुद्धयो देवाः ब्रह्मरुद्रपुरस्सराः ॥**

**शरण्यं शरणं जग्मुः नारायणमनामयम् ।**
**तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥**
**अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।**
**उत्सन्नान् भगवान् वेदान् उज्जहार हरिस्स्वयम् ॥**

**चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।**
**कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ॥**

**चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ।**
**एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ॥**
**ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।**
**ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः"** ॥ इति ॥

## भाष्यकाराः

एतेषां ब्रह्मसूत्राणां अनेके व्याख्यातारः तथा भाष्यकाराश्च वर्तन्ते खलु । तेषु अन्यतमः द्वैतमतप्रतिष्ठापनाचार्यः इति लोके प्रसिद्धः श्रीमध्वाचार्यः । स तु वायोः अवतारभूतः ।

तस्मिन् काले अन्यत्र चिन्तनसरणिमागतानि दर्शनानि कर्नाटकदेशे पुष्टिं समधिगत्य नूतनानां ग्रन्थानां निर्माणे कारणानि अभवन् । मध्वदर्शनं तु अस्माकं कर्नाटकभूमावेव वैदिकमार्गमनुसृत्यैव प्रारब्धम् । अस्य दर्शनस्य अग्रिमग्रन्थकाराः सर्वे दक्षिणदेशीयाः विशेषतः कर्नाटकदेशीयाः आसन् । दर्शनप्रपञ्चे एव कर्नाटकराज्यस्य द्वैतदर्शनस्य विशिष्टं योगदानं विद्यते । यद्यपि सर्वाणि इमानि दर्शनानि औपनिषदानि, तथापि स्पष्टतया विपश्चित्सम्मततया तर्कानुगुणतया सकलजनबुद्धिगम्यतया द्वैतदर्शनस्य प्रकाशनं श्रीमध्वाचार्येण कृतमिति निर्विवादः । [23]

## द्वैतवेदान्तः

जीवानां कल्याणार्थमशेषकल्याणगुणविशिष्टस्य साक्षाद्भगवतः आदेशानुसारं भगवत्स्वरूपं व्याख्यातुं परमकारुणिको जीवोत्तमः वायुदेवो भुवि मध्वाचार्यरूपेण आविर्बभूव ।

**आदेशमौलिमणिमुज्वलवर्णमेनम्**

**बद्धाञ्जलिर्मरुदनर्घ्यमधत्त मूर्ध्ना ।**

**हारावलीमिव हृदा विभुदेन्द्रयांञ्नाम्**

**बिभ्रन्निजाननुजिघृक्षुरवातितीर्षत्** ॥ [मध्व.2.4]

श्रीमध्वाचार्यः स्वयमेव ग्रन्थेषु स्वस्वरूपं प्रकटीचकार ।

**"यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**

**बट् तद्दर्शनमित्थमेव निहितं देवस्य भर्गो महत् ।**

**वायो रामवचोनयं प्रथमकं वृक्षो द्वितीयं वपुः**

**मध्वो यत्तु तृतीयमेतदमुना ग्रन्थकृतः केशवे** [अनुव्याख्यानम्] इति ।

अयं फलितार्थः । मतत्रयेषु सुप्रसिद्धाः आचार्याः स्वावतारस्य स्पष्टपरिचयं न चक्रुः । श्रीमध्वाचार्यः एव स्वपरिचयं अकरोत् । केवलं शब्दमात्रेण न । किन्तु कुरुक्षेत्रे-पारन्तीक्षेत्रे-बदरीक्षेत्रे-चिक्कमगळूरुक्षेत्रे स्वभीमावतारस्य सम्बन्धं सोदाहरणं प्रकटीचकार ।

अत एवोक्तम्–

**“प्रथमो हनुमन्नाम द्वितीयो भीम एव च ।**

**पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः”॥** इति ।

“तस्य श्रीमन्मध्वाचार्यस्य आविर्भावकालस्तु क्रैस्तत्रयोदशशतकस्य प्रारम्भ” इति मराठीभाषायां रामाचार्य लिखिते “मध्वाचार्य व त्यांचे तत्त्वज्ञान”नामके पुस्तके वर्णितम् । क्षितितलेऽस्मिन् कृतावतारः श्रीमदानन्दतीर्थभगवत्पादाचार्यः बहून् भूरिभावगभीरान् ग्रन्थान् व्यरचयत् । तेन चासौ वैदिकसिद्धान्तं प्राचीकसत् ।

**श्लोकार्द्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।**

**ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः** ॥ [शुकानुशासनम्]

इत्यद्वैतिभिः संक्षेपेण यथा स्वमतमुपस्थापितम् । तथैव श्रीमध्वाचार्यः स्वमतं सप्रमाणं समर्थयति । तदर्थं अद्भुतं ब्रह्मसूत्रभाष्यं अतनोत् ।

**“व्यासदेवहृदयातिवल्लभं वासुदेवमगणय्यसद्गुणम् ।**

**साधयत् सकलदोषवर्जितं ज्ञनभक्तिदमनन्तसौख्यदम् ॥** [मध्व.9.8]

**उक्तमुक्तमभिदेयमुत्तमम् वेदवाक्यमनुवानयन्मुहुः ।**

**व्यञ्जयत् स्मृतिवचोभिरञ्जसा तस्य चार्थमतियुक्तयुक्तिमत् ॥** [मध्व.9.9.]

**बालसङ्घमपि बोधयद् भृशम् दुर्निरूपवचनञ्च पण्डितैः ।**

**अप्रमेयहृदयं प्रसादवत् सौम्यकान्ति च विपक्षभीषणम्** ॥ [मध्व.9.10.]

**अस्तदूषणमवन्ध्यभाषणम् लक्षितं सकललक्षणैः समम् ।**

**माननीयमपि नाकिनायकैः रूपमन्यदिव धन्यमात्मनः ॥** [मध्व.9.11.]

**एकविंशतिकुभाष्यदूषकं ब्रह्मसूत्रगणभाष्यमद्भुतम् ।**

**अप्यदूष्यमतनोदनन्तधीः भूतभाविभवदात्मभिः क्वचित् ॥**

मध्व.वि. 9.8–12] इति

कविः श्रीनारायणपण्डिताचार्यः मध्वभाष्यस्य महिमां अवर्णयत् । श्रीमध्वाचार्यम् महाभाष्याचार्यः–वेदप्रवचनाचार्यः–कवीन्द्रः–अमितमतिः–अलेशधीः–आयतचेताः–अनन्तमतिः– अतुच्छधिषणः–अनूनबोधः–अपरिमितमनीषः–अपूर्वपूरुषः–कालवित्–गरिष्ठधीः– अनन्तस्वान्तः–अखिलगुरुः–अघनाशनकीर्तिः इत्यादिविशेषणैः आचार्यं वर्णयामास ।

मध्वभाष्यस्य प्रमेयाणां सङ्ग्रहं श्रीव्यासराजतीर्थः एकेन श्लोकेन चकार । तथा हि –

**श्रीमन्मध्वमते हरिः परतरः सत्यं जगत्तत्त्वतो**

**भिन्नाः जीवगणाः हरेरनुचराः नीचोच्चभावं गताः ।**

**मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं**

**ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः** ॥ इति ॥

**विश्वं सत्यं हरिः कर्ता जीवोऽन्यः परमार्थतः ।**

**वेदाः सत्यं प्रमाणं चेत्येवं व्यासमतस्थितिः ॥** [वादरत्नावली]

तदेवं सर्वेऽपि वेदाः, सर्वाणि पुराणादीनि शास्त्राणि च श्रीहरेर्गुणगणानुवर्णनपरकाणि भवन्ति । स एव भगवान् विष्णुः जगत्कर्ता, सर्वान्तर्यामी, सच्चिदानन्दमयो भवति । तस्मात् सर्वतन्त्रस्वतन्त्रस्य तस्य भगवतः उपासना सर्वेषां प्राणिनां हितकारिणी भवति ॥ इत्येवं नवरत्नमालिकास्तोत्रेण मध्वमतस्य प्रमेयसङ्ग्रहं श्रीव्यासराजतीर्थः अकरोत् ।

## भगवता परशुरामेण निर्मितः तौळवप्रदेशः

भगवान् परशुरामः एकविंशतिवारं भूमण्डलं प्रदक्षिणीकृत्य दुष्टक्षत्रियान् अहनत् । कश्यपमहामुनये  भुवं दानरूपेण अदात् । दत्तभुवौ वासः न विधेयः इति निश्चित्य समद्रं आयुधेन दूरीचकार । तत्र नूतनप्रदेशं निर्मितवान्[33] । भूमेः सृष्टिकार्ये भगवतः सङ्कल्पः विलक्षणः । तत्र असुरसंहारोऽपि उद्देशः ।

**एनं विषयं कृष्णावधूतः –**

**“भार्गवः ततः पाथसां निधौ अक्षिपच्छरं  सातविक्रमः ।**

**तेन तद्गताः राक्षसाः हताः सोऽपि वारिधिर्दूरतो ययौ”** [मन्दारमरन्दचम्पू–1–34] इति निरूपितवान् । पश्चिमसमुद्रतटे कासरगोडुप्रदेशतः गोकर्णपर्यन्तरप्रदेशः तौळवप्रदेशः । क्रि.श. 14–15 शतके विराजमानः पूज्यः श्री श्रीराजराजेश्वरतीर्थः –

**“तत्राऽसीनः शिरसि महति प्रस्खलन्मेघबिम्बे**

**पश्याधस्तात् विवृतनयनस्तौळवं देशभागम् ।**

**आगोकर्णं जलधिवलयेनाऽवृतं दक्षिणेन**

**ब्रह्मावासं नृपतिरिपुणा जामदग्न्येन सृष्टम्”** [रामसन्देश–पू. 42]

इति अवर्णयत् ।

स एव प्रदेशः "परशुरामप्रदेशः" । प्राचीग्रन्थेषु "शूर्पाकारप्रदेशः" इति उक्तम् । तस्मिम् प्रदेशे सप्तमोक्षदायकक्षेत्राणि प्रसिद्धानि ।

तथा हि –

**"रौप्यपीठं कुमाराद्रिः कुम्भासी च ध्वजेश्वरः ।**

**क्रोडगोकर्णमूकाम्बाः सप्तैताः मोक्षदायिकाः"**

इति सप्तक्षेत्राणि प्रसिद्धानि ।

तत्र तावत् गोकर्णक्षेत्रं उत्तरकन्नडमण्डले सुब्रह्मण्यक्षेत्रञ्च दक्षिणकन्नडमण्डले वर्तते । उडुपिमण्डले पञ्चक्षेत्राणि सन्ति ।

## शिवळ्ळिग्रामः

तौळवप्रदेशे "शिवळ्ळिग्रामः" सुविख्यातः प्रदेशविशेषः वर्तते ।

**"वेदाद्रिसद्व्रतपीठपुरेश्वराभां**

**ग्रामो विभूषिततरः शिवरूप्यनामा"** [मध्व.वि.2.10] इति ।

उडुपि–मणिपालयोः मध्यदेशो भवति शिवळ्ळिग्रामः । अस्य ग्रामस्य मूलनाम "शिवळ्ळि" इति । शिवस्य ग्रामः इत्यर्थे {ಶಿವನ ಹಳ್ಳಿ–ಶಿವಳ್ಳಿ] "शिवळ्ळि" इत्यभवत् । अस्मिन् विषये बहवः बहुधा निर्वचनं कुर्वन्तु । भवतु नाम । रजतपीठे "शिवः आसीत्" इत्यर्थे एव "शिवळ्ळि" इति निर्वचनं समीचीनमिति प्राचीनानां अभिप्रायः ।

पूर्वं "रामभोज" नामकः राजा इमां भूमिं शशास ।[34] एकदा राजा वाजपेयसवनं कर्तुं भूशोधनं अकरोत् । तदा तत्र कुठाराघातेन एकः सर्पः ममार । सर्पहत्यादोषपरिहारार्थं मुनयः प्रायश्चित्तं अवोचन् ।

तदा राजा तत्प्रायश्चित्तार्थं शिवळ्ळिग्रामस्य चतुर्षु दिक्षु "मुच्चिलुकोडु–मांगोडु–अरिकोडु–तांगोडु–प्रदेशे इति नागालयं [स्कन्दालयम्] निर्मिमे । तत्र मुच्चिलुकोडुक्षेत्रं उडुपितः अलेवूरु मार्गे कुक्किकट्टे[ಕುಕ್ಕಿಕಟ್ಟೆ] इति प्रदेशे वर्तते । श्रीपेजावरमठस्य अधीने बहुसुन्दरं बभूव । तपोवनमिव विभाति । तथैव नैरुत्यदिशि उडुपितः कडेकारु मार्गे मांगोडुक्षेत्रं वर्तते । एतदपि क्षेत्रं जीर्णोद्धारं अभवत् । एवमेव उडुपितः पुत्तूरुदुर्गालयमार्गे वायव्यदिशि अरिकोडुक्षेत्रं वर्तते । श्रीसोदेमठाधीशानां मार्गदर्शने जीर्णोद्धारं अवाप । तांगोडुक्षेत्रं उडुपितः पेरम्बळ्ळि मार्गे वर्तते । एतेषां क्षेत्राणां मध्ये रजतपीठं स्थापयामास । श्रद्धया भगवन्तं प्रार्थयामास । तेन सन्तुष्टः भगवान् परशुरामः लिङ्गरूपेण सन्निहितः । भगवदागमनेन राजा परमानन्दभरितः बभूव । तं श्रद्धया भक्त्या च आराधयामास । तेन अयं ग्रामः "रजतपीठपुरम्" इति प्रख्यातो बभूव । श्रीमदनन्तेश्वरः लिङ्गरूपेण विराजते [35] । अयमेव शिवळ्ळिकुलजानां कुलस्वामी ।

रजतपीठपुरस्य चतुर्षु दिक्षु दुर्गालयं अपि चकार । इन्द्राळि श्रीपञ्चदुर्गा–बैलूरु श्रीमहिषमर्दिनीदुर्गा–कन्नर्पाडि श्रीजयदुर्गा–पुत्तूरु श्रीदुर्गा इति दुर्गालयचतुष्टं प्राचीनाः निर्दिशन्ति ।

सप्तमोक्षदायकक्षेत्रेषु रौप्यपीठं प्रथमपङ्क्तौ विराजते । प्रादेशिकभाषायां "उडुपि" इति नाम । अत्र"अब्जारण्यम्" इत्यस्मिन् प्रदेशे उडूनां नक्षत्राणां पतिः चन्द्रः शिवं प्रति तपः तेपे । तेन सन्तुष्टो शिवः प्रत्यक्षः अभवत् । अनुग्रहं चकार । अत एव "उडुपि" इति प्रसिद्धः । अत्रत्यः शिवः चन्द्रेश्वरः इति ख्यातः । उडुपिग्रामस्य विशेषस्तु हरि–हरयोः नित्यसन्निधानं वर्तते । पूर्वदिशि चन्द्रेश्वरः पश्चिमदिशि कुलस्वामी श्रीअनन्तेश्वरः ।

अस्मिन्नेव शिवळ्ळिग्रामे मध्यगेहकुलजाः वसन्ति स्म । एते तपोधनाः ज्ञानधनाः कृतिनिपुणाः परोपकारिणश्च आसन् । एतेषां कुलस्वामी श्रीभगवान् अनन्तासनः । एते क्रिस्तशकत्रयोदशशतके कर्नाटकप्रदेशे उडुपीति मण्डलान्तर्गतस्य अस्मिन्नेव क्षेत्रे अवसन् ।

## शिवळ्ळिग्रामपद्धतिः

शिवळ्ळिप्रदेशे द्वात्रिंशत्संख्याकाः ग्रामाः सन्ति । ग्रामपद्धतिग्रन्थे एवं वर्णितम् । पश्चिमे षोडशग्रामाः

**"करेवूरुश्च वर्काडि मरणि कोळनाडुताः ।**
**पाडि कूडलुग्रामश्च मोगेबैलिति नामकः ॥**
**मित्तनाडुश्च निर्मार्गःसिमन्तूरु सतोदिका ।**
**तथा तेने कळाख्याश्च शिवबेळ्ळि ग्राम एव च ॥**
**ब्रह्मावरश्च निर्वार कूटग्रामश्च विश्रुतः ।**
**तथा स्कन्दपुरश्चेते पश्चिमग्राम नामकः ॥** इति सङ्गृहीतम् ॥

## पूर्वषोडशग्रामाः –

**श्रीपाडिर्वोडियिनार्ळकारं दूरश्च उज्जरि**
**कुन्निमार्गो कोक्कडश्च रामञ्जा पुदे बेल्पडिः ।**
**ऐर्नाडुरिडेकेदुश्च केम्मिञ्जश्च ततः परः**
**पाडिञ्ज सिरियाडिश्च कोडिपाडिश्च षोडशः** ॥ इति ।

एवम् आहत्य त्रयस्त्रिंशत् ग्रामाः। तत्रत्य शिवळ्ळिकुलानि पञ्चपञ्चाशदधिकपञ्चशतम् ।

# शिवळ्ळिकुलम्

1. अङ्गिन्ताय 2. अञ्जनंतोडित्ताय 3.अंबलण्णाय 4.अंणकुञ्जित्ताय 5. अङ्किल्लाय 6.अम्बरत्ताय 7.अम्बळित्ताय 8.अम्बिताय 9.अम्बुकण्णाय 10.अक्केमोक्किनाय 11.अगळित्ताय 12.अग्गित्ताय 13.अग्नित्ताय 14.अडपुन्नाय 15.अडराय 16.अङ्कत्ताय17.अडिग 18.अण्णित्ताय 19.अण्णकुञ्जित्ताय 20.अण्णाय 21.अनलत्ताय 22.अनन्तोडित्ताय 23.अनिञ्जत्ताय 24.अनळित्ताय 25.अनिञ्जत्ताय 26.अन्नाडित्ताय 27.अधिकारि 28.अप्पुन्ताय 29.अमतोडित्ताय 30.अमेत्ताय इत्यादीनि पञ्चशताधिकानि कुलानि भवन्ति ।

## तौळवमण्डलस्य विद्वत्परम्परा

तौळवमण्डले अविच्छिन्नविद्वत्परंपरा वर्तते । तत्र ग्रन्थकाराः व्याख्यानकाराः संशोधकाः अद्यापकाः प्रवचनकाराश्च प्रसिद्धाः । तौळवपण्डिताः द्विविधाः । यतयः गृहस्थाश्च इति । तत्र अनेके यतयः संस्कृतवाङ्मये अपूर्वं योगदानं ददुः । तत्र तावत् श्रीमध्वाचार्यः

**“नानासुभाषितस्तोत्रगाथादिकृतिसत्कृतीः**
**त्वयि रत्नाकरे रत्नश्रेणीः वा गणयन्ति के”** [मध्व.15.84]

इति पण्डिताचार्यस्य

वचनानुसारं श्रीमध्वाचार्यः अपरिमितं ग्रन्थसमूहं रचयामास इति ज्ञायते । सर्वमूलग्रन्थाः इत्येव प्रसिद्धाः एते ग्रन्थाः परमादरणीयाः । सर्वमूलग्रन्थान् विरचय्य द्वैतदर्शनं सुविस्तृतं चकार ।

व्यासदेवहृदयातिवल्लभान् ज्ञानभक्तिदान् ग्रन्थान् कृत्वा संशयतिमितं छित्वा विज्ञानभानुं प्रादर्शयत् । श्रीमध्वाचार्यस्य ग्रन्थान् बहवः तौळवयतिपुङ्गवाः ग्रहस्थाश्च व्याचख्युः ।

तत्र प्रथमः **श्रीहृषीकेशतीर्थः** । श्रीमध्वाचार्यस्य प्रथमशिष्यः श्रीपलिमारुमठस्य मूलपुरुषश्च । अपि च सर्वमूलग्रन्थस्य लिपिकारः । तेन लिखितः सर्वमूलग्रन्थः श्रीपलिमारुमठे वर्तते । तस्य कृतयः – 1.सम्प्रदायपद्धतिः 2. अनुमध्वचरितम् . 3.भावप्रकाशिका [गीताव्याख्यानम्]

**श्रीराजराजेश्वरतीर्थः** – श्रीपलिमारुमठस्य सप्तमो यतिः । तस्य कृतयः 1.श्रीरामसन्देशः 2. मङ्गळाष्टकम् [बहुप्रसिद्धम्]

**श्रीरघुवर्यतीर्थः** – श्रीपलिमारुमठस्य नवदशमः यतिः । तस्य कृतयः 1.श्रीरघुनाथविजयः 2.लघुपरिभाषा 3.कृष्णस्तुतिः 4.सुभाषितमण्डलम् 5.प्रमेयनवमालिकाव्याख्यानम् 6. वेदान्तग्रन्थानां लघुटिप्पणीः 7.गद्य–सुळादिः [कन्नडभाषा] ।

**श्रीरघुप्रवीरतीर्थः–** श्रीपलिमारुमठस्य द्वाविंशतियतिः । अस्य कृतिः हनुमद्भीममध्वाष्टोत्तरशतनामस्तोत्रम् ।

**श्रीविद्यामान्यतीर्थः–** श्रीपलिमारुमठस्य नवविंशतियतिः । अस्य कृतयः 1. अद्वैततत्वसुधासमीक्षा 2.तत्वमार्ताण्डविमर्शः 3.मायावादनिरासाख्यग्रन्थानेकार्थमालिका 4.तत्वमार्ताण्डखण्डनम्

**श्रीअदमारुमठस्य मूलपुरुषः श्रीनरहरितीर्थः ।** अस्य कृतिः 1. यमकभारतटीका

**श्रीलोकेशतीर्थः–** श्रीकृष्णापुरमठस्य चतुर्थः यतिः । अस्य कृतिः 1.विष्णुतत्वविनिर्णयटीका ।

**श्रीविश्वभूषणतीर्थः –** श्रीकृष्णापुरमठस्य द्वाविंशतियतिः । अस्य कृतिः 1. दशावतारचरितम् ।

**श्रीविद्येन्द्रतीर्थः–** श्रीकृष्णापुरमठस्य अष्टाविंशतियतिः । कृतिः गङ्गापञ्चकस्तुतिः ।

**श्रीश्रीनिधितीर्थः –** श्रीपुत्तिगेमठस्य पञ्चदशयतिः । अस्य कृतयः

1.श्रीनिधितीर्थीयः[सुधाटीका]

**श्रीराघवेन्द्रतीर्थः–** श्रीपुत्तिगेमठस्य एकविंशतियतिः । अस्य कृतयः श्रीराघवेन्द्रतीर्थीयः ।

**श्रीवेदनिधितीर्थः –** श्रीशीरूरुमठस्य एकादशयतिः । अस्य कृतिः गीताभाष्यसुबोधिनीटीका ।

**श्रीश्रीधरतीर्थः–** श्रीशीरूरुमठस्य द्वादशयतिः । अस्य कृतिः श्रीकृष्णलीलाकाव्यम् ।

**श्रीलक्ष्मीन्द्रतीर्थः –** श्रीशीरूरुमठस्य नवविंशतियतिः । अस्य कृतिः ऋजुत्वचन्द्रोदयः ।

**श्रीविष्णुतीर्थः –** श्रीमध्वाचार्यस्य पूर्वाश्रमानुजः । श्रीसोदेवादिराजमठस्य मूलपुरुषः । अस्य कृतयः 1.सन्न्यासपद्धतिः 2.श्रवणद्वादशीनिर्णयः 3.रमेशस्तुतिः 4.रमास्तोत्रम् 5.मध्वविजयप्रमेयमालिका ।

**श्रीवेदात्मतीर्थः–** श्रीसोदेमठस्य दशमयतिः । अस्य कृतिः 1.कविकर्णामृतम् [वायुस्तुतिव्याख्या] 2.नखस्तुतिव्याख्या ।

**श्रीरत्नगर्भतीर्थः –** श्रीसोदेमठस्य द्वादशमयतिः । अस्य कृतिः महाभारततात्पर्यटीका ।

**श्रीवेदाङ्गतीर्थः –** श्रीसोदेमठस्य त्रयोदशमयतिः । अस्य कृतयः 1.तात्पर्यदीपिका 2.ऐतरेयोपनिषद्भाष्यटीका 3.वायुस्तुतिटीका 4.मध्वविजयपदार्थदीपिकाटीका 5.प्रमेयनवमालिकाटीका 6.पारिजातहरणटीका 7.भजमध्वेशस्तोत्रम् 8.भगवद्गीताटिप्पणी ।

**श्रीवादिराजतीर्थः–** श्रीविष्णुतीर्थसंस्थाने विंशतियतिः । अस्य योगदानं अपरिमितम् । वेदान्तक्षेत्रं सम्पद्भरितं अकरोत् । उडुपिश्रीकृष्णमठस्य अभिवृद्धिं अकरोत् । विंशत्यधिकशतवर्षाणि परिपूर्णजीवनं यापयामास । अस्य प्रभावेण श्रीविष्णुतीर्थसंस्थानस्य नाम श्रीवादिराजसंस्थानम् इत्यभवत् । असङ्ख्यान् ग्रन्थान् चकार । संस्कृत–कन्नड–तुळुभाषायां अपि अस्य योगदानं वर्तते । अस्य ग्रन्थसंख्यां गणयितुं प्रयासः भवति ।

**टीकाकृतयः–**

| | |
|---|---|
| 1.महाभारतलक्षालङ्कारः | 2.तात्पर्यनिर्णयभावप्रकाशिका |
| 3.तलवकारोपनिषद्भाष्यटीका | 4.तैत्तिरीयोपनिषद्भाष्यटीका |
| 5.काठकोपनिषद्भाश्यटीका | 6.आथर्वणोपनिषद्भाष्यटीका |
| 7.माण्डूकोपनिषद्भाष्यटीका | 8.तन्त्रसारटीका |
| 9.सनत्सुजातीयव्याख्यानम् | 10.पुरुषसूक्तव्याख्यानम् । |

**टिप्पण्यः–**

1.न्यायसुधागुर्वर्थदीपिका 2.तत्त्वप्रकाशिकागुर्वर्थदीपिका 3.ईशावास्योपनिषद्भाष्यटीकाटिप्पणी 4.षट्प्रश्नोपनिषद्भाष्यटीकाटिप्पणी 5.गीताभाष्यटिप्पणी

**काव्यग्रन्थाः–** 1.रुक्मिणीशविजयः 2.सरसभारतीविलासम् 3.तीर्थप्रबन्धः 4.कविकदम्बकण्ठभूषा ।

**स्वतन्त्रग्रन्थाः–** 1.युक्तिमल्लिका 2.न्यायरत्नावली 3.चक्रस्तुतिः 4.उपन्यासरत्नमाला 5.हरिभक्तिलता 6.श्रुतितत्वप्रकाशिका 7.सदाचारस्मृतिः 8.सङ्कल्पपद्धतिः 9.एकादशीनिर्णयः 10.भूगोळनिर्णयः 11.तारतम्यम् 12.चिन्ताखण्डनम् 13.पाषण्डखण्डनव्यासस्तोत्रम् 14.पाषण्डमतखण्डनम् 15.कल्पलता 16.विवरणव्रणम् 17.शकुनमाला 18.मुहूर्तराजः 19.माध्ववाग्वज्रावलिः 20.संस्कृतसूत्रार्थः 21.नयसिद्धान्तसङ्ग्रहः 22.अधिकरणनामावलिः 23.श्रीमद्भागवतानुक्रमणिका 24.वायुस्तुतिपुनश्चरणविधिः 25.भागवतसङ्ग्रहः ।

**स्तोत्रग्रन्थाः** – 1.रमेशस्तुतिः 2.रौप्यपीठकृष्णस्तुतिः 3.श्रीकृष्णस्तवः 4.श्रीकृष्णस्तुतिः 5.अष्टमहिषीकृष्णस्तुतिः 6.श्रीकृष्णस्तोत्रम् 7.आपादस्तोत्रम् 8.उक्तिप्रत्युक्तिस्तोत्रम् 9.श्रीरामदशकम् 10.श्रीरामकवचम् 11.अवतारत्रयस्तोत्रम् 12.श्रीवेदव्यासाष्टकम् 13.श्रीव्यासवर्णनम् 14.त्रिविक्रमस्तोत्रम् 15.हर्यष्टकम् 16.हयास्यदशकम् 17.हयवदनाष्टकम्. 18.हयास्यनुतिपञ्चकम्

19.हयग्रीवध्यानप्रकरणम् 20.हयग्रीवस्तुतिः 21.हयग्रीवसम्पदास्तोत्रम् 22.अक्षपञ्चकम् 23.प्रार्थनादशकम् 24.वराहहयवदनस्तोत्रम् 25.हयग्रीवस्तोत्रम् 26.परमस्तुतिः 27.नरहर्यष्टकम् 28.ऋणमोचनस्तोत्रम् 29.वेङ्कटेशमङ्गळाष्टकम् 30.दशावतारस्तोत्रम् 31.दशावतारस्तुतिः 32.चतुर्विंशतिमूर्तिस्तोत्रम् 33.धीशुद्धिस्तोत्रम् 34.श्रीश्रीशगुणदर्पणस्तोत्रम् 35.श्लोकत्रयम् 36 वराहपञ्चकम् 37.स्वप्नपद्यम् 38.सप्तरात्रोत्सवप्रकारः 39. अभयस्तवम् 40.लक्ष्म्यार्यावृत्तम् 41.दुर्गास्तवः 42.मध्वाष्टकम् 43.विभीषणहनुमत्संवादः 44.मध्वमुनिप्रतापाष्टकम् 45.सहस्रारस्तुतिः 46.कुरुस्तुतिः 47.नवग्रहस्तोत्रम् 48.हरिभक्ताष्टकम् 49.विष्णुस्तुतिः 50.श्रीहयग्रीवस्तोत्रम् 51.श्रीश्रीपादराजाष्टकम् 52.विष्णुस्तुतिः 53.श्रीरामपञ्चकम् 54.पञ्चभेदस्तोत्रम् ।

**कन्नडकृतयः** – 1. ವೈಕುಂಠವರ್ಣನೆ 2. ಲಕ್ಷ್ಮೀಶೋಭನಪದ 3. ಸ್ವಪ್ನಪದ 4. ಗುಂಡಕ್ರಿಯೆ

5. ಭ್ರಮರಗೀತೆ 6. ನಮಸ್ಕಾರಸ್ತೋತ್ರ 7. ಕೇಶವನಾಮ 8. ನೈವೇದ್ಯಪ್ರಕರಣ 9. ಅವತಾರತ್ರಯಸುವಾಲಿ 10. ನೂರಾರು ದೇವರನಾಮಗಳು 11.ಉಗಾಭೋಗ 12. ಸುಳಾದಿಗಳು. 13. ಶ್ರೀಕೃಷ್ಣಬಾಲಲೀಲೆ .

**श्रीवेदवेद्यतीर्थः** –श्रीसोदेमठे एकविंशतियतिः । अस्य कृतयः 1. तन्त्रसारटीका 2.श्रीवादिराजस्तुतिः ।

**श्रीवादिवन्द्यतीर्थः** – श्रीसोदेमठे षड्विंशतियतिः । अस्य कृतयः 1.श्रीवादिराजाष्टकम् 2.श्रीवादिराजस्तुतिः 3.जयस्तोत्रम् 4.श्रीवादिराजध्यानप्रकारः ।

**श्रीविबुधवर्यतीर्थः –** श्रीसोदेमठे अष्टाविंशतियतिः । अस्य कृतयः 1.सुभद्राहरणम् 2.विष्णुसहस्रनामव्याख्यानम् ।

**श्रीविश्वेन्द्रतीर्थः –** श्रीसोदेमठे द्वात्रिंशतियतिः । अस्य कृतिः 1.कीर्तनमञ्जरी 2.वादिराजाष्टकम् 3.विष्णुसहस्रनामश्लोकरूपकम् ।

श्रीपेजावरमठस्य मूलपुरुषः **श्रीअधोक्षजतीर्थः** । मध्वविजये "अप्रत्यक्षगुणोद्रिक्ताः" इति वर्णितम् । परन्तु एतावत्पर्यन्तुं ग्रन्थाः नोपलब्धाः ।

**श्रीकमलाक्षतीर्थः –** श्रीपेजावरमठे द्वितीययतिः । अस्य कृतिः हरिगाथा ।

**श्रीविजयतीर्थः –** श्रीपेजावरमठे पञ्चमयतिः । अस्य कृतयः 1.भागवतव्याख्यानम् 2.यमकभारतटीका 3.दशावतारहरिगाथास्तोत्रम् 4.कृष्णाष्टकम् ।

**श्रीविजयध्वजतीर्थः –** श्रीपेजावरमठे सप्तमयतिः । अस्य कृतयः 1.पदरत्नावलिः 2. महाभारततात्पर्यनिर्णयव्याख्या 3.यमकभारतव्याख्या 4.दशावतारहरिगाथा ।

**श्रीविश्वेश्वरतीर्थः** –श्रीपेजावरमठे षोडशयतिः । अस्य कृतयः 1.ऐतरेयभाष्यव्याख्या 2.उपनिषत्खण्डार्थः 3.भगवद्गीताविवरणम् 4.न्यायसुधासङ्ग्रहः ।

**श्रीविश्वपतितीर्थः** – श्रीपेजावरमठे एकविंशतियतिः । अस्य कृतयः 1.द्वादशस्तोत्रम् 2.वायुस्तुतिव्याख्यानम् 3.पञ्चस्तुतिव्याख्यानम् 4.मणिमञ्जरीव्याख्या 5.मध्वविजयटिप्पणी 6.सङ्ग्रहरामायणव्याख्यानम्

7.नरसिंहस्तुतिव्याख्यानम् 8.कृष्णाष्टकटिप्पणी 9. चतुर्दशस्तोत्रव्याख्यानम् 10.भागवतव्याख्यानम् 11.विजयध्वजाष्टकम् ।

**श्रीविश्वेशतीर्थः**श्रीपेजावरमठे सप्तविंशतियतिः । अस्य कृतयः 1. न्यायामृतव्याख्यानम् 2. नवनीतम् ।

श्रीभण्डारकेरीमठे षोडशयतिः **श्रीसुरोत्तमतीर्थः** । अस्य कृतयः 1. युक्तिमल्लिकाटीका 2.सन्न्यासपद्धतिटीका 3.पाषण्डमतखण्डनटीका ।

## मध्वकथा

तस्मिन् मध्यगेहकुले सन्मध्यकुलमौलिमणिः मध्यगेहभट्टः आसीत् । विज्ञातभारतपुराणमहारहस्यं विनीतम् एनं जनाः "भट्टः" इति अभिवदन्ति स्म । असौ मध्यगेहभट्टः श्रुतिस्मृतिसदाचारसम्पन्नः देवब्राह्मणपूजकः सदैव स्वकर्मनिरतश्च आसीत् । वेदवतीति भार्या । अनन्तासनसन्निधाने सत्सन्तानार्थं पत्न्या समं द्वादशवर्षात्मकं तीव्रं पयोव्रतं चकार । स्वच्छं च देहमधिकं विमलीचकार । तेन सुप्रसन्नो भगवान् अनन्तासनः अनुग्रहम् अकरोत् ।

भगवतः परशुरामस्य आदेशानुसारेण जीवोत्तमः असुदेवः वायुः रामाधिवेशितहरिस्वसृमौलिमालाराजद्विमानगिरिशोभिते क्षेत्रे पाजकपदे अवातरत् । एकोनचत्वारिंशाब्दे विलम्बिपरिवत्सरे आश्वीनशुक्लदशम्यां बुधवासरे मध्यगेहस्य पत्न्यां वेदवत्याम् [36] आविरभूत् । असुदेव एषः ज्ञानार्थमेव यदभूत् तस्मात् अयं वासुदेव इति नाम्ना प्रसिद्धो बभूव । बाल्यावस्थायामेव एषः अतीव तीक्ष्णधीः आसीत् । अल्पीयसा कालेनैव अनेन सर्वाण्यपि वेदवेदाङ्गादीनि शास्त्राणि समधीतानि । तत्ववादस्थापनाय सत्यान्वेषणाय च निष्चितधीः वासुदेवः जन्मस्थळं त्यक्त्वा परमपूज्यानाम् अच्युतप्रज्ञानां सकाशात् यत्याश्रमं

स्वीचकार । आनन्दतीर्थः इति गुरुणा दत्तं नाम । तत्समानार्थं श्रुत्यनुगृहीतं नामधेयं "मध्वः" इति । । दशप्रमतिः–पूर्णबोधः–सर्वज्ञः–पूर्णप्रज्ञः–इत्यादिनाम्ना प्रसिद्धो बभूव । ज्ञानभास्करः आचार्य मध्वः अनुपमश्रेष्ठदार्शनिकः। स्वतेजसा शास्त्रप्रपञ्चस्य विश्वरूपं सम्यक् दर्शयामास । अयं मध्वः आनन्दतीर्थः– पूर्णबोधः –दशप्रमतिः इत्यादि नाम्ना प्रसिद्धो बभूव । प्रथमं तावत् प्रस्थानत्रय्यां भाष्यं विरचय्य स्वमतं उपस्थाप्य असौ क्रमशः भारतस्य आकुमारीहिमाचलं प्रदक्षिणीचकार । पदयात्रया सज्जनानां हितार्थाय तत्वावादं प्रचारितवान् । तेन "द्वैतमताचार्यः" इति प्रसिद्धिं आप्नोत् ।

असौ मध्वः संसारसागरे निमग्नानां सुजीविनां समुद्धरणाय भगवत्प्रतिष्ठापितसनातनवैदिकसिद्धान्तं–विष्णुसर्वोत्तमत्वम्–पञ्चभेदादिकञ्च सर्वत्र उपदिश्य दिगन्तविश्रान्तयशः प्रसरन् सन् विरेजे । श्रीमध्वप्रणीताः सर्वे ग्रन्थाः "सर्वमूलग्रन्थाः" इति प्रसिद्धाः बभूवुः।

एवं सज्जनान् अज्ञानान्धकारात् उद्धृत्य स्ववचनामृतेन तुतोष । कर्नाटकराज्ये उडुपिक्षेत्रे श्रीकृष्णदेवालयं संस्थापयामास । तत्र श्रीकृष्णं प्रतिष्ठाप्य श्रीकृष्णपूजार्थं तत्वज्ञानप्रसारार्थञ्च अष्टौ यतीन् नियोजयामास । श्रीकृष्णपूजानिरताः ते यतयः ज्ञानप्रसारनिरताः भक्तिमार्गोद्धारकाः व्याख्यानकाराश्च आसन् । [37]

भगवता व्यासेन बदरीक्षेत्रे आज्ञप्तः श्रीमध्वाचार्यः तत्ववादस्थापनाय ग्रन्थान् व्यरचयत् । व्यासदेवहृदयातिवल्लभान् सकलदोषवर्जितान् ज्ञानभक्तिदान् अनन्तसौख्यदान् सप्तत्रिंशदधिकसंख्याकान् ग्रन्थान् निर्मिमे । श्रीमध्वप्रणीताः इमे ग्रन्थाः "सर्वमूलग्रन्थाः" इति जगति प्रसिद्धाः बभूवुः ।

प्रस्थानत्रय्यां प्रथमं भाष्यं विधाय सज्जनानां हितार्थाय विष्णुसर्वोत्तमत्वं जगत्सत्यत्वं पञ्चभेदादिकं च उपदिश्य दिगन्तविश्रान्तयशःप्रसारः विरेजे ।

जगति सर्वत्र तत्ववादं प्रतिष्ठापयामास । तस्य शिष्याश्च श्रीपद्मनाभतीर्थः–श्रीनरहरितीर्थः–श्रीमाधवतीर्थः–श्रीअक्षोभ्यतीर्थश्च इति चत्वारः यतयः अन्ये गृहस्थाश्च शिष्याः आसन् । श्रीमध्वाचार्यस्तु बदरिकाश्रमात्प्रत्यावर्तनसमये अवश्यमेव उत्कलं आगतः स्यात् इति सम्भाव्यते । यतः आचार्यस्य चतुर्षु प्रधानशिष्येषु द्वितीयः श्रीनरहरितीर्थः उत्कलीयगजपतिराजस्य मन्त्री आसीत् इति शिलालेखेभ्यः ज्ञायते । श्रीनरहरुतीर्थः पूर्वं श्यामशास्त्री इति विख्यातः आसीत् । श्रीमध्वाचार्यस्य प्रभावेण आकर्षितो भूत्वा सन्निधिं समाजगाम ।

**"पूर्वं यः श्यामशास्त्री सकलमुनिनुतं श्रीमदानन्दतीर्थं**

**नत्वा प्रोवाच भक्त्या दिशतु मम भवान् प्रीतिपूर्वं यतित्वम् ।**

**श्रीपूर्णप्रज्ञनाम्ना नरहरिमुनिरित्याह्वयं प्राप्य चोक्तः**

**साधो त्वं गच्छ शीघ्रं गजपतिनगरम् तत्र राजा भवेति"** [न.ह.य.स्तो.3] [38] इति यत्याश्रमार्थं ययाचे । शास्त्रिणः प्रार्थनानुसारं श्रीमध्वाचार्यः यत्याश्रमं दत्वा "श्रीनरहरितीर्थः" इति प्रीतिपूर्वकं नाम चकार । गजपतिनगरं शीघ्रं गन्तुं आदिदेश ।

सन्यासग्रहणानन्तरमपि श्रीमध्वाचार्यस्य आदेशानुसारं अयं मन्त्रिपदे आसीत् । ततः कञ्चित्कालं रजतपीठपुरं आगत्य गुरूणां सन्निधाने उवास । राज्ञि स्वर्गते सति अल्पवयस्कस्य तत्पुत्रस्य प्रतिनिधित्वेन प्रायः द्वादशवर्षं यावत् राज्यं पर्यपालयत् । तस्मिन् काले निश्चयेन स्वमतप्रचारं उत्कले राज्ये कृतवान् स्यात् । [39]

एवम् श्रीमध्वाचार्यः भुवि एकोनाशीतिवर्षाणि स्थित्वा भक्तान् अनुजग्राह । माघमासशुद्धनवम्यां बदरीं ययौ । आचार्यः कलियुगस्य [4339] चतुःसहस्रोत्तरत्रिशतएकोनचत्वारिंशतितमे विळम्बिसंवत्सरस्य आश्वयुजशुक्लपक्षस्य दशम्यां बुधवासरे अवतीर्य पिङ्गळनामसंवत्सरस्य माघमासस्य शुक्लपक्षस्य नवम्यां बदरीं [40] ययौ । आहत्य एकोनाशीतिवर्षाणि भुवौ स्थित्वा तत्त्ववादप्रचारं चकार ।

## श्रीमध्वाचार्यस्य योगदानम्

दार्शनिकक्षेत्रे श्र्मध्वाचायस्य योगदानं अपरिमितम् अनुपमं च । आचार्येण अष्टात्रिंशद् ग्रन्थाः विरचिताः । “सर्वमूलाः”इत्येव ग्रन्थान् व्यपदिशन्ति ज्ञानिनः । “रूपमन्यदिव धन्यमात्मनः”इति मध्वविजयोक्तरीत्या एते ग्रन्थाः आचार्यसन्निधानोपेताः पावनाश्च । एतेषां अध्ययनेन उपासनेन संरक्षणेन च आत्मोन्नतिः भवति इति प्राचीनानां सन्देशः ।

**इति भुवनविभूषणस्य भूयांसि**

**अविगणितानि कृतांतराणि हन्त ।**

**श्रवणमननकीर्तनैरभीष्टम्**

**प्रतिददतीत्यमराः प्रकीर्तयन्ति ॥** [मध्व.10.55] इति काव्योक्तरीत्या

मध्वमहिमा श्रवणमननादिना सकलाभीष्टं वर्षति ।

सर्वशास्त्राणि आलोड्य तत्र सुनिष्पन्नं सुनिर्णीतं नारायणं सर्वोत्तमत्वेन समर्थयत् । आचार्यस्य विमर्शात्मकं वाङ्मयकार्यं अन्ताराष्ट्रीयसंशोधकाः अपि मुक्तकण्ठेन प्रशशंसुः[41] । पञ्चभेदात्मकेऽस्मिन् जगति तत्ववादं प्रतिष्ठापयामास । तेन “मध्वसिद्धान्तः” इति “तत्ववादः” इति नाम प्रथितम् [42] । एतेषां ग्रन्थानां नामानि आद्यन्तश्लोकाश्च अग्रे प्रदत्तमस्ति ।

**महानन्दतीर्थस्य ये भाष्यभावं**

**मनोवाग्भिरावर्तयन्ते स्वशक्त्या ।**

**सुराद्या नरान्ता मुकुन्दप्रसादात्**

**इमं मोक्षमेते भजन्ते सदेति** ॥ [मध्व.11.79] श्रीमध्वाचार्यस्य ग्रन्थानां व्याख्याने सुरा एवाधिकारिणः । "**आनन्दतीर्थभगवद्वचसां विशिष्टव्याख्यानकर्मणि सुरा एव अधिकारिणोऽत्र**" इति श्रीमट्टीकाकृत्पादानां वचनेन स्फुटं भवति । अत एव अस्याध्ययनेन मोक्षादिपुरुषार्थः यथायोग्यम् भवतीति ग्रन्थे प्रतिपादितम् ।

## गीताप्रस्थानम्

**गीतातात्पर्यभाष्याभ्यां आभ्यां विश्वं प्रकाश्यते ।**

**गोगणैरप्रतीकारैः अर्केन्दुभ्यामिवाधिकम्** ॥ [मध्व.15.75] इति सूर्यचन्द्रौ यथा स्वकिरणैः विश्वम् प्रकाशयतः तथैव इमौ ग्रन्थौ तत्वज्ञानप्रपञ्चं प्रकाशयति ।

**[1] भगवद्गीताभाष्यम्–**

**आदिः** – देवं नारायणं नत्वा सर्वदोषविवर्जितम् ।
परिपूर्णं गुरूंश्चान् गीतार्थं वक्ष्यामि लेशतः ॥

**अन्त्यः** – पूर्णादोषमहाविष्णोः गीतामाश्रित्य लेशतः ।
निरूपणं कृतं तेन प्रीयतां मे सदा विभुः ॥

**[2] गीतातात्पर्यम्–**

**आदिः** – समस्तगुणसम्पूर्णम् सर्वदोषविवर्जितम् ।
नारायणं नमस्कृत्य गीतातात्पर्यमुच्यते ॥

**अन्त्यः** – नमस्ते वासुदेवाय प्रेयसां मे प्रियोत्तम ।
समस्तगुणसम्पूर्णनिर्दोषानन्ददायिने ॥

## सूत्रप्रस्थानम्

**[3] ब्रह्मसूत्रभाष्यम्–**

**आदिः** – नारायणं गुणैः सर्वैः उदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥

**अन्त्यः** – ज्ञानानन्दादिभिः सर्वैः गुणैः पूर्णाय विष्णवे ।
नमोऽस्तु गुरवे नित्यं सर्वथाऽतिप्रियाय मे ॥

**[4] अनुव्याख्यानम्–**

**इत्यर्थितो व्यधान्मध्वः सोऽनुव्याख्यां सतां सुधाम् ।**
**दुर्वादिगर्वाद्रिपविं मायिध्वान्तरविद्युतिम्** ॥ [मध्व.15.88] इति सज्जनानं प्रार्थनया दुर्वादिगर्वाद्रेः विदारणे दक्षं अनुव्याख्यानं ग्रन्थं चकार ।

**आदिः** – नारायणं निखिलपूर्णगुणैकदेहम्
निर्दोषमाप्यतममप्यखिलैःसुवाक्यैः ।
अस्योद्भवादिदमशेषविशेषतोऽपि
वन्द्यं सदा प्रियतमं मम सन्नमामि ॥
तमेव शास्त्रप्रभवं प्रणम्य जगद्गुरूणां
गुरुमञ्जसैव । विशेषतो मे
परमाख्यविद्याव्याख्यां करोमि अन्वपि
चाहमेव ॥

**अन्त्यः** – नमो नमोऽशेषपूर्णगुणैकधाम्ने पुरुषोत्तमाय ।
भक्तानुकम्पादतिशुद्धसंविद्धात्रे
अनुपाधिप्रियसद्गुणात्मने ॥

**[5] अणुभाष्यम्–**

**आदिः** – नारायणं गुणैः सर्वैः उदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥

**अन्त्यः** – नमो नमोऽशेषदोषदूरपूर्णगुणात्मने ।
विरिञ्चि[ञ्च]शर्वपूर्वेढ्य वन्द्याय श्रीवराय ते ॥

**[6] न्यायविवरणम्–**

**आदिः** – चेतनाचेतनजगन्नियन्त्रेऽशेषसंविदे ।
नमो नारायणाय अजशर्वशक्रादिवन्दित ॥

**अन्त्यः** – नमोऽजभवभूर्यक्षपुरःसरसुराश्रय ।
नारायणारुणं मह्यं मापते प्रेयसां प्रिय ॥

## उपनिषत्प्रस्थानम्

**[7] ऐतरेयोपनिषद्भाष्यम्–**

**आदिः** – नारायणं निखिलपूर्णगुणैकदेहम्
सर्वज्ञमच्युतमपेतसमस्तदोषम् ।
प्राणस्य सर्वचिदचित्परमेश्वरस्य
साक्षादधीश्वरमियां शरणं रमेशम् ॥

**अन्त्यः** – पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे ।
अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ॥

**[8] छान्दोग्योपनिषद्भाष्यम्** –

**आदिः** – अत्युद्रिक्तविदोषसत्सुखमहाज्ञानैकतानप्रभा
सर्वप्राभवभोगशक्तिबलसत्सारात्मदिव्याकृतिम् ।
सृष्टिस्थाननिरोधनित्यनियतिज्ञानप्रकाशावृति–
ध्वान्तामोक्षविमोक्षदं हरिमजं नित्यं सदोपास्महे ॥

**अन्त्यः** – पूर्णानन्दमहोदधिःपरमतो नित्यः परस्मान् सदा
सर्वज्ञः सकलेशिता गुणनिधिः नित्योत्सवस्तद्विधाम् ।
सर्वस्मादधिकं मम प्रियतमः स्विष्टादपीष्टोत्तमः
सर्वस्माच्च हितात् सदा हिततमः प्रीतो भवेन्मे
हरिः ॥
नित्यानन्दो हरिः पूर्णो नित्यदा प्रीयतां मम ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे ॥

**[9] बृहदारण्यकोपनिषद्भाष्यम्–**

**आदिः** – प्राणादेरीशितारं परमसुखनिधिं सर्वदोषव्यपेतम्
सर्वांतःस्थं सुपूर्णं प्रकृतिपतिमजं सर्वबाह्यं
सुनित्यम् । सर्वज्ञं सर्वशक्तिं सुरमुनिमनुजाद्यैः सदा
सेव्यमानम् विष्णुं वन्दे सदाऽहं
सकलजगदनाद्यन्तमानन्ददं तम् ॥

**अन्त्यः** – पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे ।
अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ॥

**[10] ईशावास्योपनिषद्भाष्यम्–**

**आदिः** – नित्यानित्यजगद्धात्रे नित्याय ज्ञानमूर्तये ।
पूर्णानन्दाय हरये सर्वयज्ञभुजे नमः ॥

**अन्त्यः** – पूर्णशक्तिचिदानन्दश्रीतेजः स्पष्टमूर्तये ।
ममाभ्यधिकमित्राय नमो नारायणाय ते ॥

**[11] तलवकारोपनिषद्भाष्यम्–**

**आदिः** – अनन्तगुणपूर्णत्वात् अगम्याय सुरैरपि ।
सर्वेष्टदात्रे देवानां नमो नारायणाय ते ॥

**अन्त्यः** – यश्चिदानन्दसच्छक्तिसम्पूर्णो भगवान् परः ।
नमोऽस्तु विष्णवे तस्मै प्रेयसे मे परात्मने ॥

**[12] षट्प्रश्नोपनिषद्भाष्यम्–**

**आदिः** – नमो भगवते तस्मै प्राणादिप्रभविष्णवे ।
अमन्दानन्दसान्द्राय वासुदेवाय वेधसे ॥

**अन्त्यः** – नमो नमोऽस्तु हरये प्रेष्ठप्रेष्ठतमाय मे ।
परमानन्दसन्दोहसान्द्रानन्दवपुष्मते ॥

[13] काठकोपनिषद्भाष्यम्–

**आदिः** – नमो भगवते तस्मै सर्वतः परमायते ।
सर्वप्राणिहृदिस्थाय वामनाय नमो नमः ॥

**अन्त्यः** – नमो भगवते तस्मै विष्णवे प्रभविष्णवे ।
यस्याहमाप्त आप्तेभ्यः यो म आप्ततमः सदा ॥

[14] अथर्वणोपनिषद्भाष्यम्–

**आदिः** – आनन्दमजरं नित्यं अजमक्षयमच्युतम् ।
अनन्तशक्तिं सर्वज्ञं नमस्ते पुरुषोत्तमम् ॥

**अन्त्यः** – प्रीयतां भगवान् मह्यं प्रेष्ठ प्रेष्ठतमः सदा ।
मम नित्यं नमाम्येनं परमोदारसद्गुणम् ॥

[15] माण्डूकोपनिषद्भाष्यम्–

**आदिः** – पूर्णानन्दज्ञानशक्तिस्वरूपं नित्यमव्ययम् ।
चतुर्धा सर्वभोक्तारं वन्दे विष्णुं परं पदम् ॥

**अन्त्यः** – एकोऽपि निर्विशेषोऽपि चतुर्धा व्यवहारभाक् ।
यस्तं वन्दे [चिदात्मानं] सादानन्दं विष्णुं
विश्वादिरूपिणम् ॥

[16] तैत्तिरीयोपनिषद्भाष्यम्–

**आदिः** – सर्वं ज्ञानमनन्तं आनन्दं ब्रह्म सर्वशक्त्येकम् ।
सर्वैर्देवैरीढ्यं विष्ण्वाख्यं सर्वदैमि सुप्रेष्ठम् ॥

**अन्त्यः** – पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे ।
अमन्दानन्दसांद्राय प्रेयसे विष्णवे नमः ॥

## श्रुतिप्रस्थानम् –

[17] **ऋग्भाष्यम्–**

**आदिः** – नारायणं निखिलपूर्णगुणार्णमुच्च
सूर्यामितद्युतिमशेषनिरस्तदोषम् ।
सर्वेश्वरं [गुरुं] हरिमजेश[नु]नतं प्रणम्य
वक्ष्यामि ऋगर्थमतितुष्टिकरं तदस्य ॥

**अन्त्यः** – वर्ताऽभिगन्ता तरुता जेता चाऽस्य न हि क्वचित् ।
युद्धं महाधनं त्वर्भं प्रसिद्धं धनमेव हि ॥

## इतिहासप्रस्थानम् [43]

**इतिहासपुराणाब्धेः भवच्चित्ताद्रिलोडितात् ।**
**जातां भारततात्पर्यसुधां कः सन्न सेवते** ॥ [मध्व.15.75] इति
पुराणानां सारसर्वस्वभूतं महाभारततात्पर्यनिर्णयं चक्रे ।

[18] **महाभारततात्पर्यनिर्णयः–**

**आदिः** – नारायणाय परिपूर्णगुणार्णवाय
विश्वोदयस्थितिलयोन्नियतिप्रदाय ।
ज्ञानप्रदाय विबुधासुरसौख्यदुःख–
सत्कारणाय वितताय नमो नमस्ते ॥

**अन्त्यः** – **आ**नन्दतीर्थाख्यमुनिः सुपूर्ण –
प्रज्ञाभिधो ग्रन्थमिमं चकार ।
नारायणेनाभिहितो बदर्याम्तस्यैव शिष्यो
जगदेकभर्तुः॥ तस्मादयं ग्रन्थवरोऽखिलोरु–
धर्मादिमोक्षान्तपुमर्थहेतुः ।किं वोदितैरस्य गुणैः
समस्तैः नारायणः प्रीतिमुपैत्यऽतोलम् ॥
यः सर्वगुणसम्पूर्णः सर्वदोषविवर्जितः । प्रीयतां
प्रीतयेवालं विष्णुर्मे परमः सुहृत् ॥

[19] **यमकभारतम्** –

**भगवंश्चित्रकवितां लौकिकीं दर्शयन् किल ।**

**गोप्यं भारतसङ्क्षेपमकृथा विश्वविस्मयम्** ॥ [मध्व.15.83] इति विश्वविस्मयजनकम् यमकभारतं चक्रे । अणुमहाभारततात्पर्यनिर्णय इत्यपि नाम वर्तते ।

**आदिः** – ध्यायेत्तं परमानन्दं यन्मातापतिमयदपरमानन्दम् ।
उज्झितपरमानन्दं पत्याद्याद्याश्रमैः सदैव परमानन्दम् ॥

**अन्त्यः** – इति नारायणनामा सुखतीर्थपूजितः सुरायणनामा ।
पूर्णगुणैर्धिकपूर्णज्ञानेच्छाभक्तिभिः स्वधिकपूर्णः ॥

## पुराणप्रस्थानम्

[20] भागवततात्पर्यनिर्णयः–

**पुराणस्थानपान्थानां आभाषात्रयवेदिनाम् ।**

**भवता सुसखा चक्रे श्रीमद्भागवतनिर्णयः** ॥ [मध्व.15.77] इति

काव्योक्तरीत्या पुराणानां हार्दं ज्ञातुं श्रीमद्भागवतनिर्णयं चक्रे ।

**आदिः** – सृष्टिस्थित्यप्ययेहानियतिदृशितमो बन्धमोक्षाश्च यस्मात्
अस्य श्रीब्रह्मरुद्रप्रभृतिसुरनरद्वीशशक्रात्मकस्य ।
विष्णोर्व्यस्ताः समस्ताः सकलगुणनिधिः
सर्वदोषव्यपेतः पूर्णानन्दोऽव्ययो यो गुरुरपि
परमश्चिन्तये तं महान्तम् ॥

**अन्त्यः** – नित्यादोषस्वरूपाय गुणपूर्णाय सर्वदा ।
नारायणाय हरये नमः प्रेष्ठतमाय ते ॥

## प्रकरणग्रन्थाः

**[21] तत्वसङ्ख्यानम्** –

**आदिः** – स्वतन्त्रं अस्वतन्त्रञ्च द्विविधं तत्वमिष्यते ।
स्वतन्त्रो भगवान् विष्णुः भावाभावौ द्विधेतरत् ॥

**अन्त्यः** – सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने ।
बन्धो मोक्षःसुखं दुःखं आवृतिर्ज्योतिरेव च ।
विष्णुनाऽस्य समस्तस्य समासव्यासयोगतः ॥

[22] **तत्वविवेकः–**

**आदिः** – स्वतन्त्रं परतन्त्रं च प्रमेयं द्विविधं मतम् ।
स्वतन्त्रो भगवान् विष्णुः निर्दोषाखिलसद्गुणः ॥

**अन्त्यः** – य एतत् परतन्त्रं तु सर्वमेव हरेः सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥

[23] **तत्वोद्योतः–**

**वादादयः प्रकरणस्फुलिङ्गास्तनवोऽप्यलम् ।**

**विपक्षकक्षं क्षिण्वन्ति मारुतेन त्वयोरिताः** ॥ [मध्व.15.81] इति श्रीमध्वाचार्यः तत्त्वोद्योतनामकं ग्रन्थं चकार ।

**आदिः** – सर्वत्राखिलसच्छक्तिः स्वतन्त्रोऽशेषदर्शनः ।
नित्यातादृशचिच्छेत्ययन्तेष्टो नो रमापतिः ॥

**अन्त्यः** – सत्यचिच्छेत्यपतये मुक्तामुक्तोत्तमाय ते ।
नमो नारायणाय आर्यवृन्दवन्दितपद्द्वय ॥

[24] **विष्णुतत्वविनिर्णयः–**

**एकाकी किल यश्चक्रे पदं मौलिषु विद्विषाम् ।**

**तत्त्वनिर्णयपार्थोऽयम् केन नाम न पूज्यते** ॥ [मध्व.15.80] इति

गोग्रहणादिप्रसङ्गे यथा अर्जुनः एकाकी युद्धं कृत्वा जयशाली अभवत् तथा विष्णुतत्त्वविनिर्णयः मान्यः भवति ।

**आदिः** – सदागमैकविज्ञेयं समतीतक्षराक्षरम् ।
नारायणं सदा वन्दे निर्दोषाशेषसद्गुणम् ॥

**अन्त्यः** – स्वतन्त्रायाखिलेशाय निर्दोषगुणरूपिणे ।
प्रेयसे मे सुपूर्णाय नमो नारायणाय ते ॥

**[25] प्रमाणलक्षणम्–**

**लोकानामवलोकाय मार्गस्यास्य व्यधाद्भवान् ।**
**करुणाकर नेत्राभेवादसन्मानलक्षणे** ॥ [मध्व.15.79]

इत्युक्तरीत्या श्रीमध्वाचार्यः यथार्थदर्शनाय नेत्रे इव प्रकाशमानौ प्रमाणलक्षण–कथालक्षणौ ग्रन्थौ चकार ।

**आदिः** – अशेषगुरुमीशेषं नारायणमनामयम् ।
सम्प्रणम्य प्रवक्ष्यामि प्रमाणानां स्वलक्षणम् ॥

**अन्त्यः** – अशेषमानमेयैकसाक्षिणेऽक्षयमूर्तये ।
अजेशपुरुहूतेड्य नमो नारायणाय ते ॥

**[26] कथालक्षणम्–**

**आदिः** – नृसिंहमखिलाज्ञातिमिराशिशिरद्युतिम् ।
सम्प्रणम्य प्रवक्ष्यामि कथालक्षणमञ्जसा ॥

**अन्त्यः** – आनन्दतीर्थमुनिना ब्रह्मतर्कानुसारतः ।
कथालक्षणमित्युक्तं प्रीत्यर्थं शार्ङ्गधन्वनः ॥

[27] **उपाधिखण्डनम्–**

**आदिः** – नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः ।
अशेषदोषरहितः प्रीयतां कमळालयः ॥

**अन्त्यः** – नमोऽमन्दनिजानन्दसांद्रसुन्दरमूर्तये ।
इन्दिरापतये नित्यानन्दभोजनदायिने ॥

[28] **मायावादखण्डनम्–**

**आदिः** – नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः
जयत्यमितसज्ज्ञानसुखशक्तिपयोनिधिः ॥

**अन्त्यः** – नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम् ॥
इति सर्वज्ञमुनिना मायावादतमोऽखिलम् ।
निरस्तं तत्ववादे सतां संशयनुत्तये ॥

[29] **प्रपञ्चमिथ्यात्वानुमानखण्डनम्**

**आदिः** – विमतं मिथ्या दृश्यत्वात् यदित्थं तत्तथा यथा सम्प्रतिपन्नम् । इत्युक्ते जगतोऽभावात् आश्रयासिद्धः पक्षः ॥

**अन्त्यः** – यो दृश्यते सदानन्दनित्यव्यक्तचिदात्मना ।
निर्दोषाखिलकल्याणगुणं वन्दे रमापतिम् ॥

[30] खण्डार्थ[कर्म]निर्णयः–

**आदिः** – य इज्यते विधीशानशक्रपूर्वैः सदा मखैः ।
रमाप्रणयिने तस्मै सर्वयज्ञभुजे नमः ॥

**अन्त्यः** – नमो नारायणायाजभवशक्रोष्णरुङ्मुखैः ।
सदा वन्दितपादाय श्रीपाय प्रेयसेऽधिकम् ॥

## आकरग्रन्थाः

[31] तन्त्रसारसङ्ग्रहः–

**कस्तन्तसारं सम्प्राप्य न स्यात् पर्याप्तवांछितः ।**
**अमरैराश्रितच्छायं कल्पद्रुममिवोत्तमम् ॥** [मध्व.15.78] इति
काव्योक्तरीत्या तन्त्रसारग्रन्थः सकलाभीष्टप्रदः ।
**ग्रन्थोऽयं पाठमात्रेण सकलाभीष्टसिद्धिदः ।**
**किमु ज्ञानात् किमुन्वनुष्ठानात् उभयस्माच्च किं पुनः** ॥ [तन्त्रसारः]

**आदिः** – जयत्यब्जभवेशेन्द्रवन्दितः कमळापतिः ।
अनन्तविभवानन्दशक्तिज्ञानादिसद्गुणः ॥

**अन्त्यः** – अशेषदोषोज्झितपूर्णसद्गुणम् सदा
विशेषावगतोरुरूपम् । नमामि नारायणमप्रतीपं सदा
प्रियेभः प्रियमादरेण ॥

[32] सदाचारस्मृतिः–

आदिः – यस्मिन् सर्वाणि कर्माणि सन्यस्याध्यात्मचेतसा ।
निराशीर्निममो याति परं जयति सोऽच्युतः ॥

अन्त्यः – अशेषकल्याणगुणनित्यानुभवसत्तनुः ।
अशेषदोषरहितः प्रीयतां पुरुषोत्तमः ॥

[33] जयन्तीनिर्णयः–

आदिः – रोहिण्यां अर्धरात्रे तु यदा कालाष्टमी भवेत् ।
जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी ॥

अन्त्यः – सर्वायेति च मन्त्रेण ततः पारणमाचरेत् ।
धर्मायेति ततः स्वस्थो मुच्यते सर्वकिल्बिषैः ॥

[34] कृष्णामृतमहार्णवः–

आदिः – अर्चितः संस्मृतो ध्यातः कीर्तितः कथितः श्रुतः ।
यो ददात्यमृतत्वं हि स मां रक्षतु केशवः ॥
तापत्रयेण सन्तप्तं यदेतदखिलं जगत् ।
वक्ष्यामि शान्तये तस्य कृष्णमृतमहार्णवम् ॥
संसारविषपानेन ये मृताः प्राणिनो भुवि ।
अमृताय स्मृतस्तेषां कृष्णामृतमहार्णवम् ॥

अन्त्यः – यः सर्वगुणसम्पूर्णः सर्वदोषविवर्जितः ।
प्रीयतां प्रीतयेवाऽलं विष्णुर्मे परमः सुहृत् ॥
श्रीमदानन्दतीर्थार्यसहस्रकिरणोत्थिता ।
गोततिः सततं सेव्या गीर्वाणैः सिद्धिदा भवेत् ॥

[35] **यतिप्रणवकल्पः**–

**आदिः** – समिच्चर्वादिकान् हुत्वा सम्यक् पुरुषसूक्ततः ।
सर्वेषामभयं दत्वा विरक्तः प्रव्रजेत् हरिम् ॥

**अन्त्यः** – तदर्थान् ब्रह्मसूत्रैश्च सम्यग् निर्णीय तत्वतः ।
विष्णोः सर्वोत्तमत्वञ्च सर्वदा प्रतिपादय ॥

## स्तोत्रकृतयः

**नानासुभाषितस्तोत्रगाथादिकृतिसत्कृतीः ।**

**त्वयि रत्नाकरे रत्नश्रेणीर्वा गणयन्ति के** ॥ [मध्व.15.84] इति अपरिमितस्तोत्राणि चकार । गणयितुं असाध्यम् कार्यं श्रीमध्वाचार्यः अकरोत् ।

[36] **नखस्तुतिः**–

**आदिः** – पान्त्वस्मान् पुरुहूतवैरिबलवन् मातङ्गमाद्यद्धटा–
कुम्भोच्चाद्रिविपाटनाधिकपटुप्रत्येकवज्रायिताः ।
श्रीमत्कण्ठीरवास्यप्रततसुनखरा दारितारातिदूर–
प्रध्वस्तध्वान्तशान्तप्रविततमनसा भाविता
भूरिभागैः ॥1॥

**अन्त्यः** – लक्ष्मीकान्त समन्ततो विकलयन् नैवेशितुस्ते समम्
पश्याम्युत्तमवस्तु दूरतरतोऽपास्तं रसो योऽष्टमः ।
यद्रोषोत्करदक्षनेत्रकुटिलप्रान्तोत्थिताग्निस्फुरत्
खद्योतोपमविस्फुलिङ्गभसिताः ब्रह्मेशशक्रोत्कराः ॥

**[37] द्वादशस्तोत्रम्–**

**आदिः** – वन्दे वन्द्यम् सदानन्दं वासुदेवं निरञ्जनम् ।
इन्दिरापतिमाद्यादिवरदेशवरप्रदम् ॥
अन्त्यः– आनन्दचन्द्रिकास्यन्दन वन्दे ।
आनन्दतीर्थपरानन्दवरद ॥

**[38] कन्दुकस्तुतिः–**

अम्बरगङ्गाचुम्बितपादः पदतलविदलितगुरुतरशकटः ।
कालियनागक्ष्वेळनिहन्ता सरसिजनवदलविकसितनयनः ॥
कालघनालीकर्बुरकायः शरशतशकलितरिपुशतनिवहः ।
सन्ततमस्मान् पातु मुरारिः सततगसमजवखगपतिनिरतः ॥

**[39] तिथिनिर्णयः [40] सन्न्यासपद्धतिः [41] बिल्वमङ्गलः साधुः [42]भाधातुव्याख्यानम् [43] सूर्यसिद्धान्तवचनम् ।**

**एषु दभ्रमतीन् दभ्रान् दभ्रान् हसत्त्युच्चैः सतां सभा ।**
**चिन्तामणींश्चिन्तयन्ती मितानप्यमितार्थदान्** ॥ [मध्व.15.85] एवं

श्रीमध्वाचार्यः चिन्तामणीमिव अभीष्टप्रदान् अमितार्थदान् ग्रन्थान् अदात् । अपि च

**चञ्चलोऽयं समानेयो मनोमीने हरिस्थले ।**
**विषयोदकसञ्चारी सुयत्नबडिशाहृतः** ॥ सुभाषितस्लोकोऽपि प्रसिद्धम् ।

**अपरोऽपीष्यतेऽस्माभिः ग्रन्थेष्वेतेषु सत्स्वपि ।**

**सत्स्वपीन्द्रादिषु पुरा तारकारिरिवामरैः ॥**

**ग्रन्थेभ्य एभ्योऽगाथेभ्यो युक्तयो नो दुरुद्धराः ।**

**मनोमान्द्यात्ततो ग्रन्थं  व्यक्ततर्कततिं कुरु ॥**

**इत्यर्थितो व्यधान्मध्वो सोऽनुव्याख्यां सतां सुधाम् ।**

**दुर्वादिगर्वाद्रिपविं मायिध्वान्तरविद्युतिम् ॥** [मध्व.86–88] इति

देवा अपि ग्रन्थरचनाय प्रार्थयामासुः । मध्वग्रन्थानामुपयोगः न केवलं मानवानाम् । किन्तु देवा अपि आदरात् स्वीकुर्वन्ति इति सुस्पष्टमभवत् ।

एतावद्विपुलं वेदान्तसाहित्यं विरचय्य तत्ववादस्थापनं अकरोत् । वैदिकधर्मसंरक्षणं विधाय  अनितरसाधारण्येन शुशुभे । श्रीमध्वचरितम् अद्भुतमेवैतत् ।

## लिकुचकुलम्

तौळवमण्डले पञ्चशताधिकानि कुलनामानि प्रसिद्धानि । तेषु प्रसिद्धानि च ताळेत्ताय–पेजत्ताय–पेलत्ताय–तोटन्तिल्लाय–तेङ्किल्लाय –मूडिल्लाय–पडिल्लाय–मित्तिल्लाय–नडिल्लाय–सग्रित्ताय–पदकण्णाय–कल्लूराय इत्यादीनि । तत्र लिकुचकुलमेव विद्वत्कुलम् । “पेजत्ताय” इति तौळवभाषायां कुलनाम । संस्कृते “लिकुचकुलम्” इति । कन्नडभाषायां [ಹೆಬ್ಬೆಲಸು] “हेब्बेलसु” इत्यर्थः । एतद्वंशीयाः कबेनाडु भूभागे आसन् ।  कासरगोडु इति प्रसिद्धः अयं प्रदेशः तौळवमण्डलस्य राजधानी अपि आसीत् । तौळवमण्डलस्य अस्य राजा जयसिंहः आसीत् । जनाः प्रीत्या एनं “कबेसिंह” इति आह्वयन्ति स्म ।

एतस्मिन्नेव स्वर्णयुगे श्रीसुब्रह्मण्यपण्डितः आसीत् । सः कविरपि आसीत् इति श्रूयते । भगवतोः शङ्कर–नारायणयोः परमानुग्रहेण तस्य द्वौ पुत्रौ । तत्र प्रथमः पुत्रः त्रिविक्रमपण्डितः । अपरः शङ्करपण्डितः ।

**परमेश्वरयोः प्रसादयोगात्**

**सुतरत्नं तदसूत सूरिपत्नी ।**

**परिषत्पदपत्तनेषु नार्घो**

**विविदे यस्य समः परीक्षकाग्र्यैः ॥** [मध्व.13.45]

श्रीसुब्रह्मण्यपण्डितस्य पत्नी भगवतः परमानुग्रहेण अनर्घ्यं पुत्ररत्नं प्राप्तवती । परमानन्दभरितः श्रीसुब्रह्मण्यपण्डितः सुतस्य मुखारविन्दं अवलोक्य कृतकृत्यतां अगमत् । अत एव त्रिविक्रमः इति नामकरणं अकरोत् । "**वेदे कवितायां वेदान्ते इति त्रिषु विक्रमः अस्य इति उचितां त्रिविक्रमाख्याम्**" इति नामकरणस्य औचित्यं भावप्रकाशिकायां निरूपितम् । तत्र त्रिविक्रमपण्डितः बाल्ये एव आशुकविरासीत् ।

**कलभाषण एव सूरिपोतः**

**कविरासीत् अनवद्यपद्यवादी ।**

**अवभाति ननु प्रभाप्रभावी**

**भगवान् बालतरोऽपि तिग्मभानुः ॥** [मध्व. 13.47]

इति त्रिविक्रमण्डितस्य सहजप्रतिभायाः चित्रणं प्रदत्तम् । एकदा तस्य गृहं भिक्षुः आगमिष्यति । भिक्षां याचते । तदा बालकः त्रिविक्रमः "हे भुक्षुक अस्मासु कर्मकरः एकः । बहवः अशनार्थिनः । तुभ्यं कः यच्छति ?" इति विद्वत्पूर्णं उत्तरं यच्छति [44] । एषः बाल्ये एव उषाहरणं नाम महाकाव्यं

रचयामास । तौळवमण्डलस्य प्रथमो महाकविरिति प्रतिथो बभूव । प्राप्रवयस्कः त्रिविक्रमपण्डितः भानुपुरस्सरान् मीमांसकपण्डितान् वादे निरुत्तरान् अकरोत् ।

अयं राज्ञः जयसिंहस्य आस्थानकविरासीत् । अद्वैतानुयायी श्रीत्रिविक्रमार्यः समग्रे भारते अद्वितीयः विद्वानास । स एव सर्वेषां पण्डितानां सर्वसभानाञ्च मुखवाणी आसीत् । कदाचित् राजा जयसिंहः कावुप्रदेशस्य विष्णुमङ्गले श्रीमध्वाचार्यस्य श्रीत्रिविक्रमार्यस्य च समागमं समायोजितवान् । पूर्वमेव मध्वाचार्यस्य कीर्त्या पाण्डित्येन च त्रिविक्रमार्यः समाकर्षितः । इदानीं साक्षाद्द्रष्टुं अपूर्वः कालः सम्प्राप्तः । तयोर्मध्ये संवादः समभवत् । अन्ते आचार्यस्य दयार्द्रदृष्ट्या अस्य आर्यस्य सर्वसंशयाः च्छिन्नाः । वैदिकसिद्धान्तस्य सूक्ष्मातिसूक्ष्माः विचाराः ज्ञाताः । **"पदपद्मरजोदास्यं धृवं मे दीयतम्"** इति आचष्ट । ततःपरं श्रीमध्वाचार्यस्य परमशिष्यः अभवत् । अपूर्वसभां आयोजयितारं राजानं –

**"स्वःसुन्दरीभुजलतापरिरम्भणीधूः**
**पौरन्दरी भजति यं भजतां भुजिष्या ।**
**आनन्दतीर्थभगवत्पदपद्मरेणुः**
**स्वानन्ददो भवतु ते जयसिंह भूप"** इति अनुजग्राह ।

अयमेव श्रीमध्वाचार्यस्य साक्षाच्छिष्यः ।

एकदा महापूजासमयः । श्रीमध्वाचार्यः महानैवेद्यं निवेदयन् आसीत् । हनुमरूपेण श्रीरामाय, भीमरूपेण श्रीकृष्णाय, श्रीमध्वरूपेण श्रीवेदव्यासाय नैवेद्यं समर्पयामास । तदा रहसि श्रीत्रिविक्रमार्यः आचार्यस्य साक्षात् अवतारत्रयं अपश्यत् । भावपरवशस्सन् वायुस्तुतिरूपेण अवतारत्रयस्य महामहिमां अस्तौत् ।

**श्रीमद्विष्वंघ्रिनिष्ठातिगुणगुरुतमश्रीमदानन्दतीर्थ–**

**त्रैलोक्याचार्यपादोज्वलजल्जलसत्पांसवोऽस्मान् पुनन्तु ॥**

**वाचां यत्र प्रणेत्री त्रिभुवनमहिता शारदा शारदेन्दु**

**ज्योत्स्ना भद्रस्मितश्रीधवलितककुभा प्रेमभारम् बभार ॥** [वायुस्तुतिः]

इति ।

श्रीत्रिविक्रमपण्डितं तस्य पुत्रः श्रीनारायणपण्डितः काव्येऽस्मिन् वर्णयति –

**तमोनुदानन्दमवापलोकः तत्त्वप्रदीपाकृतिगोगणेन ।**

**यदास्यशीतांशुभुवा गुरूंस्तान् त्रिविक्रमार्यान् प्रणमामि वर्यान् ॥**

[मध्व.1.4] इति ।

अस्य श्रीत्रिविक्रमार्यस्य अनुजन्मा शङ्करार्यः श्रीमध्वग्रन्थस्य पालकः आसीत् । श्रीकल्याणीदेवी इति श्रीत्रिविक्रमार्यस्य अनुजा । तया विरचितानि द्वित्राणि स्तोत्राणि उपलभ्यन्ते । अस्यां विषये कविरपि मौनं वहति ।

श्रीत्रिविक्रमार्यस्य त्रयः पुत्राः । तृतीयः पुत्रः श्रीनारायणपण्डितः । सोऽपि महान् कविरासीत् । अयमेव षोडशसर्गात्मकं मध्वविजयाख्यं चारित्रिकमहाकाव्यं ददौ । काव्येऽस्मिन् समग्रं मध्वचरितम् सङ्गृह्य महदुपकारं चकार । देवगुह्यां मन्त्रवर्णैः अनुवर्णनीयां महिमां अवर्णयत् । काव्यञ्च इदम् ऐतिहासिकं मध्वसम्मतम् ।

## कविपरिचयः

अङ्गिरसगोत्रोत्पन्नोऽयं श्रीनारायणपण्डितः कविकुलतिलकः इत्येव विद्वद्वृन्दे प्रसिद्धः ।

**"त्रिविक्रमविपश्चितो गुणनिधेः सुशिष्याः सुताः ।**

**सतामभिमताः त्रयो यस्तृतीयोऽत्र नारायणः** ॥" इति स्वीयभावप्रकाशिकायां स्वस्य परिचयं अदात् । अलङ्कारप्रयोगे च सिद्धहस्तः । अयमेव लिकुचवंशे अपरिमितान् ग्रन्थान् चकार । "त्रैविक्रमार्यः, लिकुचसूरिसूनुः, लिकुचतिलकसूनुः, इत्यादिविशेषणेन आत्मनः परिचयं कारयति । एषः महाकाव्यानि–खण्डकाव्यानि–यमककाव्यानि–स्तोत्राणि–अध्यात्मग्रन्थाः–वेदान्तग्रन्थाः–आचारग्रन्थाः इत्येवं वैविध्यमयग्रन्थान् ददौ । अस्य शास्त्रनिष्ठा–काव्यनिष्ठा–वस्तुनिष्ठा–इतिहासनिष्ठा च अप्रतिमा अनुपमा च । अत एव काव्यप्रपञ्चे अयं महान् कविरपि । अनेन निर्मितं षोडशसर्गात्मकं मध्वविजयमहाकाव्यमिदं न केवलं काव्यम् । अपि तु शास्त्रम् इत्यपि ख्यातम् । बहुभिः विद्वद्भिः व्याख्यातञ्च । बहवः अस्य ग्रन्थस्य पारायणेन सर्वसिद्धिं आप्नुवन् । आरण्यकाचार्यः इत्येव प्रसिद्धः श्रीविष्णुतीर्थाचार्यः प्रतिदिनं श्रीमध्वविजयमहाकाव्यस्य पारायणं करोति स्म । तत्प्रभावेण अनेकसंसिद्धिं अवाप । इदानीमपि बहवः जीवने समस्यानिवारणाय मध्वविजयं आश्रयन्ति । काव्योक्तरीत्या परिहारं कृत्वा धन्यतां अनुभवन्तः सन्ति । अत एव इदं केवलं काव्यमिति न । मार्गदर्शकम् काव्यम् इत्येव प्रसिद्धम् ।

अनेन विदुषा चतुर्विंशतिसंख्याकाः ग्रन्थाः निर्मिताः । तत्र सङ्ग्रहरामायणं नाम महाकाव्यं रामकथासङ्ग्रहात्मको ग्रन्थः । अपरं मध्वविजय इति महाकाव्यम् । जगद्गुरोः मध्वाचार्यस्य कथासङ्ग्रहात्मकोऽयं ग्रन्थः ।

**"अनुप्रासप्रचुरमिदं काव्यम्"** इति श्रीविश्वपतितीर्थः अवर्णयत् । अनुप्रासालङ्कारे सिद्धहस्तं एनं कविं प्राचीनटीकाकाराः अपि सगौरवं अस्तुवन् ।

**"प्राचां प्राचः"** इति श्रीवादिराजतीर्थः, **"आनन्दतीर्थभगवत्पादोपासकः"** इति श्रीराघवेन्द्रतीर्थश्च अस्तौत् ।

## अस्य कवेः कृतयः

[1] श्रीमध्वविजयः
[2] भावप्रकाशिका
[3] अणुमध्वविजयः [प्रमेयनवमालिका]
[4] मणिमञ्जरी
[5] नयचन्द्रिका [अनुव्याख्यानटीका]
[6] यमकभारतटीका
[7] अणुभाष्यटीका
[8] कृष्णामृतमहार्णवटीका
[9] मिथ्यात्वानुमानखण्डनटीका
[10] सङ्ग्रहरामायणम्
[11] शुभोदयः
[12] पारिजातहरणम्
[13] योगदीपिका
[14] मध्वामृतमहार्णवम्
[15]अंशावतारः
[16] नरसिंहस्तुतिः
[17] रामगीत्यष्टकम्
[18] दाशरथ्यष्टकम्
[19] कृष्णमालास्तोत्रम्
[20] महालक्ष्मीस्तुतिः
[21] मध्वकवचम्
[22] अणुवायुस्तुतिः
[23] शिवस्तुतिः
[24] तारतम्यस्तोत्रम् ।

## मध्वविजयकाव्यम्

श्रीमध्वाचार्यस्य विजयगाथां वर्णयति इदं काव्यम् । मध्वाचार्यसमकालीनेनैव लिकुचकुलसम्भवेन नारायणपण्डितेन रचितमिदं काव्यम् ।

अत एव अभिमानास्पदो विचारः । षोडशसर्गात्मकोऽयं ग्रन्थः काव्यलक्षणान्वितः । अष्टोत्तरसहस्रश्लोकात्मके काव्येऽस्मिन् प्रथमसर्गे वायोः प्रथमावतारस्य हनुमतः, द्वितीयावतारस्य भीमस्य च कथां निरूपयति । द्वितीयसर्गतः तृतीयावतारस्य मध्वस्य बाल्यादारभ्य अवतारपरिसमाप्तिपर्यन्तं जीवनगाथा निरूपिता ।

**मुकुन्दभक्त्यै गुरुभक्तिजायै**

**सतां प्रसत्त्यै च निरन्तरायै ।**

**गरीयसीं विश्वगुरोर्विशुद्धां**

**वक्ष्यामि वायोरवतारलीलाम्"** ॥ [मध्व.1.5] इति कवेः उद्घोषणम् ।

श्रीमध्वविजयस्योपरि स्वयमेव कविः व्याख्यानद्वयं चकार । एका भावप्रकाशिका अपरा प्रमेयनवमालिका । तत्र भावप्रकाशिका लघुटीका । तस्यां मध्वविजये अनुक्तानि स्थळनामानि निर्दिष्टानि । तदाधारेणैव स्थळविशेषानां परिचयः सम्भवति । संस्कृतवाङ्मये महाकाव्यस्योपरि तत्कवेः एव व्याख्यानं दुर्लभम् । अत एव इदं असदृशं वैशिष्ट्यपूर्णं महाकाव्यम् । अस्मिन् काव्ये मध्वाचार्यस्य अद्भुतं समग्रभारतपर्यटनम् सङ्ग्रहीतम् । अत्र वर्णितानां तीर्थक्षेत्राणां परिचयः सुखकरः भवेत् इति भावनया एव अयं प्रबन्धः प्रवृत्तः ।

## प्रमाणानि

[1] गौतमस्य ऋषेः शापात् ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवाः ब्रह्मरुद्रपुरःसराः ॥ [स्कान्दे – ब्र.सू.भाष्ये]

[2] अततीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदान् उज्जहार हरिः स्वयम् ॥ [स्कान्दे – ब्र.सू.भाष्ये]

[3] पृक्षो वपुः पितुमान् नित्य आ शये
द्वितीयमा सप्तशिवासु मातृषु ।
तृतीयमस्य वृषभस्य दोहसे
दशप्रमतिं जनयन्त योषणः॥ [ऋ.वे.1.141]

[4] संक्षिप्नुवाक्ये मयि मन्दबुद्धौ सन्तो गुणाढ्याः करुणां क्रियासुः ॥ मध्व.वि. 1.6]

[5] ಆ ಗ್ರಾಮದ ರೀಸರ್ವೇ ಸಂಖ್ಯೆ 3 ರಲ್ಲಿ ಶ್ರೀಮಹಾವಿಷ್ಣುದೇವಸ್ಥಾನವಿತ್ತು. [ತು.ನಾ.ಮ.ಪ–ಪುಟ–25]

[6] धर्मपुष्पस्त्वर्थपत्रः कामपल्लवसंयुतः ।
महामोक्षफलो वृक्षो वेदोयं समुदीरितः ॥ [ब्रह्माण्डे–भा.ता.नि. 1.]

[7] अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः ।

[8] "तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते"

[9] यतः प्रवृत्तिर्भूतानां येन सर्वमिदंततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं वन्दति मानवः ॥ [गीता]

10] जिज्ञासोत्थज्ञानजात् तत्प्रसादादेव मुच्यते [अनु.व्या.]

[11] ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् [ईशावास्योमनिषत्]

[12] चक्रे वेदतरोः शाखाः [भा.व.1.3.21]

आविर्हितस्त्वनुयुगं स हि सत्यवत्याम् [भा.व. 2.7.36]

[13] ततः प्रसन्नो भगवान् व्यासो भूत्वा च तेन च। [गीताभाष्यम्]

[14] प्रादुर्भूतो हरिर्व्यासो विरिञ्चिभवपूर्वकैः। [अनु.व्या.]

[15] भारतं पञ्चरात्रञ्च मूलरामायणं तथा।

पुराणं भागवतं चेति सम्भिन्नश्यास्त्रपुङ्गवः ॥ गीताभाष्यम्]

[16] सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते।

दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥ [म.सं.6.74]

[18] बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः।

त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे [र.वं..10.26]

[19] श्रुतीनां गूढार्थत्वात् द्रष्टृणां मतिबाहुल्याच्च को वा प्रेक्षावान् किं मन्यते? कथं वा मन्यते? तत्सर्वं वा तत्तद्दर्शननिरूपणावसरे स्पष्टं भविष्यति। किन्तु अतिगम्भीरोऽयं दर्शनाम्बोधिः साधारणमतीनां जनानां दूरतः आलोकयितुमप्यशक्य इत्यतः तत्र प्रवेशसौलभ्याय प्रतिपदार्थं मतभेद उच्यते। [स.द.सं.]

[20] अस्ति परलोक इति मतिर्यस्य स आस्तिकः, अस्ति नास्तिदिष्टं मतिः [अ.ध्या.4.4.60]

[21] वेदान्तविज्ञानसुनिश्चितार्थाः इति [ मु.उ.3.2.5]

[22] द्विविधं हि शास्त्रम्। निर्णीतं निर्णेतव्यम्।

तत्र आद्यं ब्रह्मसूत्रादिकम् [न्यायसुधा]

ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि [गीताभाष्यटीका]

[23] पूर्वः पूर्वः पूर्वपक्षः यावत् मध्वमतोदयः ।
अन्ते सिद्धस्तु सिद्धान्तः मध्वस्यागम एव हि ॥ यु.म]

[24] यतो वाचो निवर्तन्ते अप्राप्य मनसा सह इत्यादि [तै.उ.2.8.1]

[25] जीव ईशो विशुद्धा चित् भेदस्तस्यास्तयोः द्वयोः ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥ [सि.ले.सं.टी.]

[26] जगत्प्रवाहः सत्योऽयम् नैव मिथ्या कथञ्चन ।
ये त्वेतत् अन्यथा ब्रूयुः सर्वहन्तार एव ते ॥[म.ता.नि...]

[27] नित्यावियोगिनीं देवीं रामो मन्ददृशामपि [मणि.मं 2.]

[26] महत्तत्वादहङ्कारं ससर्ज शिवविग्रहम् ।
दैवान् देहान् मनःखानि खञ्च स त्रिविधात् ततः ॥ [मणि.मं.1.4]

[27] विश्वस्थितिप्रळयसर्गमहाविभूती वृत्तिप्रकाशनियमावृतिबन्धमोक्षाः ।
यस्या अपाङ्गलवमात्रत ऊर्जिता सा श्रीः यत्कटाक्षबलवत्यजितं नमामि ॥ द्वा.स्तो. 7.1.]

[28] प्रजानां पालनाद् विष्णुः प्रजापतिरितीरितः ।
स वायुं सूर्यनामानं चन्द्रनाम्नीं सरस्वतीम् ॥
सूर्याचन्द्रमसौ देवः ससर्ज पुरुषोत्तमः ।
तावाविश्य स्वयं विष्णुः सर्वसृष्टीः करोत्यजः ॥
अमूर्तस्थः स वायुस्तु मूर्तसंस्था सरस्वती ॥[षट्.उ.भा.]

[29] तारतम्यं विमुक्तिदम् [अणु.भा]

[30] ते ये शतं ब्रह्मण आनन्दः ..

[31] सत्वं रजस्तम इति गुणाः प्रक्तिसम्भवाः[भ.गी.

[32] अर्थापत्त्युपमाभावानुमानान्तर्गतात् क्वचित् [वे.र.]

[33] कर्णे पदन्यस्तरुची रिरंसुःवाराशिवस्त्रं जघनाब्धि यस्याः ।
अमूमुचद्. बाणकरेण भूमेः श्रीभार्गवः सा जयति क्षितिर्नः ।।ती.प्र.1.6.।।

[34] रामभोजराड् धरणिमण्डलं शासति स्म भूसुरकदम्बकम् ।
दानवैभवैर्मधुरभाषितैः रञ्जयन् जनं निजविनीतिभिः
[मं.म.चं.1.36]

एकदा सकलराजानुतांघ्रिः वाजपेयसवनं स विधातुम् ।
आरभन् भृगुकुलोत्तममेनं सप्ततन्तुविबुधं बत वव्रे ॥
[मं.म.चं.1.38]

नृपः कारयामास तस्याऽसनार्थं सुपीठं स रूप्योत्तरं त्वष्टृवर्गैः ।
दिवाकृत्सहस्रप्रभाभासमानं समस्तैश्चिरत्नैश्च रत्नैर्विचित्रम् ॥
[1.39]

भृगुपरिवृढमेनं पीठमारोप्य मेनं नतिनुतिततिपूर्वं याचयामास पूर्वम् ।
भजकसुजनबन्धो ज्ञानसिन्धो मुदन्धो भवतु पुरविधानं रूप्यपीठाभिदानम् ॥ [1.40]

इति क्षितिपतेः वचःसरणिमादरादाददद् ददौ वरमरिन्दमः खलु तथेति भूमिभुजे ।
तदादि सकला जनाः जगति रूप्यपीठाभिदां
वदन्ति नगरीमिमां कनकगिरौ जानामि तत् ॥ [1.41]

[35] शिवान्तर्यामितां स्वीयां प्रियान् प्रति निबोधयन्
दयावारिनिधिः शैवीं शिलामाश्रित्य शोभते ॥
ईशस्याहीशपदवीं भासन्निव भाविनीम् ।
अध्यास्ते शेषशयनः स्निग्धां लिङ्गशिलां हरिः ॥ [ती.प्र.1.14–15]

[36] त्रिशताब्दोत्तरचतुःसहस्राब्देभ्यः उत्तरे एकोनचत्वारिंशाब्दे विलम्बिपरिवत्सरे । आश्वीनशुक्लदशमीदिवसे भुवि पावने पाजकाख्ये शुभक्षेत्रे दुर्गया च अभिवीक्षिते ।
जातो मध्याह्नवेलायां बुधवारे मरुत्तनुः । [अ.मध्व.]

[37] मध्वशिष्याः बहवः शिष्या एषां मुहुस्तथा ।
अलञ्चक्रुः अलं पृत्थ्वीं सर्वे सद्गुणभूषणाः [मध्व.वि.15.132]

[38] कर्नाटकस्य बेळगावी श्रीरामतत्वप्रकाशे कार्यालये शा.श.1845 तमे वर्षे [क्रि.श.1923–24] मुद्रिते "स्तोत्रमहोदधि"पुस्तके 109तमं स्तोत्रम् ।

[39} शिलालेखः– यश्च श्रीकमठाधिनायकमहाकार्यैकबद्धव्रतः
तस्य प्रच्युतिवारणाय शबरानीकक्षितिध्राशनिम् ।
धत्ते सत्करवालमस्य तटिता सन्त्यक्तजीवे रिपौ
हन्तव्यानवशेषणात् निजविधिः नो यस्य
बोध्यस्तराम् ॥
स्वस्ति श्रीशकवत्सरे हुतवहव्योमद्वयक्ष्मायुतेमेषे शुक्लशशाङ्कशेखरदिने वारे न सौम्ये वरे । प्रसादं कमठाधिपस्य पुरतो निर्माय शर्मप्रदो योगानन्दनृसिंह एष भगवान्प्रीत्या प्रतिष्ठापितः ॥

आश्विनशुक्लदशमीदिवसे भुवि पावने पाजकाख्ये
शुचिक्षेत्रे दुर्गया चाभिवीक्षिते ।
जातो मध्याह्नवेलायां बुधवारे मरुत्तनुः ॥

[40] एकोनाशीति वर्षाणि नीत्वा मानुषदृष्टिगः ।
पिङ्गलाब्दे माघशुद्धनवम्यां बदरीं ययौ ॥ [अ.मध्व.]

[41] Of the controversy between the monists of the Sankara school and the dualists of the Madhva school, most people are ignorant of the Madhva side of the case, though there are many who may be familiar with the monistic point of view. It is hoped that the treatment of the philosophy of Madhva and his followers undertaken in the present volume will give new light to students of Indian thought and will give new light to students of Indian thought and will present many new aspects of dialectical logic hitherto undiscovered in Indian or European thought.'

– (preface, A History of Indian Phylosophy, Vol. 4)

[42] पूर्वः पूर्वः पूर्वपक्षः यावन्मध्वमतोदयः ।
अन्ते सिद्धस्तु सिद्धान्तः मध्वस्यागम एव हि ॥ [श्री.वा.रा.य]

[43] ……….I will only mention that this is no new discovery of mine, but that such psychological and metaphysical explanations of the characters and the plot of the Mahabharata are scattered in the ancient Indian commentaries of the epic, the best known among them being the Mahabharata-tatparya-nirnaya of Anan datirtha, the great Madhvacarya, who has clearly stated in the work that the story of the Great Epic has been related in such a way as to convey also an allegorical meaning:

Dr. V.S.Sunkdhankar. [Pub: Asiatic Society of Bombay, Town hall, Bombay 1957]

[44] एकः क्षपणक शाकाहर्ता बहवः क्षपणक शाकादाः ।

यत्र क्षपणक बहुशाकादाः तत्र क्षपणक साकाशा का ॥

--------------------------------

# द्वितीयोऽध्यायः

पवित्रं पाजकक्षेत्रम् – पञ्चतीर्थानि – सप्तमोक्षदायकक्षेत्राणि – अनन्तेश्वरस्य ध्वजस्तम्भः – मध्यगेह भट्टः – जातस्य नामकरणम् – गोप्रदः मूडिल्लायः – सन्दळिकेपाडि भूतपीडापरिहारः – पाजकगृहे कुलित्थकुलभक्षणम् – बीजच्छलेन पुरुषार्थम् – ननु सखा मम काननगो विभुः – कोडवूरु शङ्करनारायणः –बन्नञ्जे महालिङ्गेश्वरः – पाजके अक्षराभ्यासः – नयम्पळ्ळिग्रामे विद्वत्प्रतिभा – पाजके लिकुचशब्दार्थकथनम् – कापुग्रामे गुरुकुलः – तुरीयाश्रमस्वीकारः कार्यूरुमठः ।

# द्वितीयोध्यायः

## पवित्रं पाजकक्षेत्रम्

वायोः प्रथमावतारस्य हनूमतः जन्मभूमिः तिरुमलक्षेत्रम् । द्वितीयावतारस्य भीमस्य जन्मभूमिः बदरीक्षेत्रम् । तृतीयावतारस्य मध्वाचार्यस्य अवतारभूमिः पावनं पाजकम् । पाजकक्षेत्रं उडुपितः आग्नेयदिग्भागे विद्यते ।

**"रामाधिवेशितहरिस्वसृमौलिमाला–**

**राजद्विमानगिरिशिभितमध्युवास ।**

**क्षेत्रं स पाजकपदं त्रिकुलैककेतुः**

**कं यद् दधाति सततं खलु विश्वपाजात्" [मध्व–2–11]** इति

प्रतिपादितम् । अस्य महिमा स्कन्दपुराणे रजतपीठपुरमाहात्मे वर्णितम् । भगवान् परशुरामः स्ववासार्थं इमं भूप्रदेशं निर्मिमे । अत्रैव परशुरामेण अधिष्ठिता हरिस्वसा दुर्गा विराजते । पाजकस्य अर्थनिष्पत्तिं कविः करोति – विश्वपाजात् परशुरामात् कं जलं दधाति इति पाजकम् ।

**"विश्वपाजात् विश्वपालकात् अजात् रामात् निमित्तात् ।**

**सः तत्र परश्वादिना तीर्थं चकारेति" [भावप्रकाशिका ]**

**"ईशेन्द्रादिसुरेन्द्राणां ईशः श्रीरमणप्रियः ।**

**यत्र प्रादुरभूद्वायुः क्षेत्रं तत् पाजकम् शुभम् [सं.प.–1] इति**

श्रीहृषीकेशतीर्थस्य वचनम् । अस्य क्षेत्रस्य "त्रिकुलैककेतुः" इति विशेषणम् । तत्र कारणं भगवतः परशुरामस्य जगन्मातायाः दुर्गायाः जीवोत्तमस्य वायोश्च निवासभूतत्वात् । अत एव त्रिकुलैककेतुवत् विराजते [1] । अपि च परशुरामेण संरक्षितः प्रदेशः । विमानगिरौ दुर्गा प्रतिष्ठिता भगवता परशुरामेण ।

इदानीं विमानगिरिः [2] कुञ्जारु [ಕುಂಜಾರುಗಿರಿ] इत्येव प्रादेशिकभाषया व्यवह्रियते । जनानां श्रद्धासमर्पणेन अयं प्रदेशः अभिविद्धिं अवाप । अस्मिन् प्रदेशे प्रदेशत्रयम् दर्शनीयम् ।

तत्र तावत् प्रथमं पर्वतस्योपरिविराजमानं श्रीपरशुराममन्दिरम् । ग्रामस्थाः एव अभिवृद्धिं चक्रुः । मनोहरं मन्दिरम् । ततः विमानगिरौ विराजमानायाः दुर्गायाः आलयम् । तत्र श्रीअदमारुमठाधीशैः श्रीविश्वप्रियतीर्थश्रीपादैः आध्यक्षे जीर्णोद्धारप्रक्रिया समर्पिता । भव्यं सुन्दरं कलापूर्णञ्च मन्दिरम् श्रावणमासे–सिंहमासे–नवरात्रिसमये च महान् सम्मर्दः भवति ।

## पञ्चतीर्थानि

पाजके परशुरामः चत्वारि तीर्थानि निर्मिमे । परशुतीर्थः–धनुस्तीर्थः–गदातीर्थः–बाणतीर्थः इति । श्रीमध्वाचार्येण निर्मितं तीर्थं वासुदेवतीर्थम् । एवं पञ्चतीर्थानि । यः अत्र स्नाति मनुजः तस्य धर्मः चतुरैः चरणैः सह वृद्धिं प्राप्नोति इति सूचितुमेव भगवान् चत्वारि तीर्थानि चकार ।

**"पृथिवीस्थेषु सर्वेषु गङ्गादिषु च सर्वशः ।**

**स्नानात् यल्लभते पुण्यं तत्र स्नानात् अवाप्यते"** [स्कान्दपुराणे] इति स्नानफलमाह ।

एकदा देवाः भुवि तीर्थसञ्चारं कृत्वा भगवन्तं अस्तुवन् । तदा भगवान्

**"परश्वादीनि तीर्थानि मयैव निर्मितानि सन्ति ।**

**तत्र स्नात्वा दुर्गां स्तुत्वा कर्मसमर्पणं कुर्वन्तु"** [3] इति आदिदेश ।

तदा देवाः तथैव आचरणं कृत्वा धन्याः बभूवुः । एवं चतुर्षु तीर्थेषु स्नात्वा अन्ते वासुदेवेन [श्रीमध्वाचार्येण] निर्मिते वासुदेवतीर्थे स्नानं कुर्यात् । अत्र

स्नानस्य नियमोऽपि एवं वर्तते । सम्पुटाकारेण “प्रथमं वासुदेवतीर्थे स्नात्वा क्रमेण चतुर्षु तीर्थेषु स्नात्वा पुनः वासुदेवतीर्थे स्नानम्” इति । बहुश्रमसाध्यः परिक्रमः । तथाऽपि श्रद्धया आगमिष्यन्ति भक्ताः । एवं पञ्चतीर्थानि पाजके विराजन्ते । तीर्थानां नामान्यपि अन्वर्थानि [4] सन्ति ।

[1] **परशुतीर्थम्**–भगवान् पाजकस्य पूर्वदिशि स्वायुधेन परशुना शिलामध्यं अच्छिनत् । तेन तीर्थं उदभूत् । तत्तीर्थं परशुतीर्थं इति नाम्ना व्यवह्रियन्ति ।

**“परश्वधेन भगवान् शिलामध्यं ददार ह ।**

**पूर्वस्यां दिशि तत्राऽसीत् तीर्थं तन्नामकं शुभम् ॥**

**तत्र यः स्नाति मनुजः मुच्यते च ऋणत्रयात् ।**

**महापातकजान् दोषान् व्यपोहति न संशयः”** [स्कान्दे] इति परशुतीर्थस्य महिमा ।

[2] **धनुस्तीर्थम्** – भगवान् परशुरामः पाजकस्य दक्षिणस्यां दिशि स्वायुधेन धनुषा तीर्थं निर्मिमे । अत्र ये स्नान्ति मनिजाः शस्त्रघातमृताः तेषां सद्गतिप्राप्तिः न संशयः ।

**“याम्यां दिशि च रामेण स्थापितं चापमद्भुतम् ।**

**धनुस्तीर्थं ततो जज्ञे प्रभावात् जगदीशितुः ।**

**शस्त्रघातमृतानां च गतिस्तत्र न संशयः”** [स्कान्दे] इति धनुस्तीर्थस्य महिमा ।

[3] **गदातीर्थम्** – भगवान् परशुरामः पाजकस्य पश्चिमदिशि गदाप्रहारेण गदातीर्थं अकरोत् । तत्र स्नानात् शतजन्मार्तितं पापं व्यपोहति ।

**"वारुण्यां दिशि देवेन भार्गवेण महात्मना ।**

**गदाघातेन जनितं गदातीर्थं परं शुभम् ।**

**तत्र स्नानात् विनश्येत्तु शतजन्मार्जितं त्वघम्"** [स्कान्दे] इति गदातीर्थस्य महिमा ।

[4] **बाणतीर्थम्** – भगवान् परशुरामः उत्तरस्यां दिशि अर्धचन्द्राकृतिना बाणेन शिलायां तीर्थं निर्मितवान् । स तु सकलतीर्थमयः बाणतीर्थः इति प्रथितः । तत्र स्नानेन ज्ञानानन्दफलं लभेत् ।

**सोमेन पालितायां तु दिशि पश्चात् महात्मना ।**

**अर्धचन्द्राकृतिर्बाणः क्षिप्तो रामेण भूतले ॥**

**प्राप्य भोगवतीं सद्यो गङ्गामादाय चाभ्यगात् ।**

**बाणतीर्थं तदभवत् सर्वतीर्थमयं क्षितौ ॥**

**बाणतीर्थे नरः स्नात्वा ज्ञानानन्दफलं व्रजेत्** इति [स्कान्दे] वर्णितम् ।

एवं भगवान् सालोक्य-सामीप्य-सारूप्य-सायुज्यनाम मोक्षपदमिव तीर्थानि निर्माय लोकान् अनुजग्राह ।

[5] **वासुदेवतीर्थम्**

वासुदेवः उपनयनानन्तरं परशुरामेण निर्मितेषु तीर्थेषु प्रतिदिनं अवगाहनस्नानं करोति स्म । एकस्मिन् दिने माता "एकाकी भवान् स्नानार्थं तावद्दूरं नो याहि" इति वाचा वारिता ।

तदा वासुदेवः मातुर्वचनपालनाय झटिति दण्डेन ईशान्यदिशि भूमिं अताडयत् । वासुदेवस्य प्रभावेण जलोद्भवः अभवत् । पितारौ अतीव चकितौ । वासुदेवः अभाषत " चतुर्षु तीर्थेषु यत्सन्निधानमस्ति तत्सन्निधानं अस्मिन् तीर्थे विद्यते" इति । वासुदेवनिर्मितत्वात् "वासुदेवतीर्थम्" इत्येव प्रख्यातम् ।

**श्रीमन्मध्यगृहाख्यविप्रगृहजः श्रीवासुदेवाभिदः**

**प्राणः प्राप्य वटुत्वमात्मजननीवाचा यदा वारितः ।**

**स्नानार्थम् त्वमृते सहायमधुना नो याहि तातेत्यसौ**

**तत्काले व्यतनोत् गृहान्तिकगतं स्वाख्यायुतं त्सरः** ॥ [सं.प]

"आत्मजननी वाचा यदा वारितः स्नानार्थं त्वमृते सहायं अधुना नो याहि तात इत्यसौ तत्काले व्यतनोत् गृहान्तिकगतं स्वाख्यायुतं सत्सरः" इति श्रीहृषीकेशतीर्थः सम्प्रदायपद्धत्यां अवर्णयत् । तत्सरः इदानीं जीर्णोद्धारेण वैभवं प्राप ।

**चत्वारि तीर्थानि विधाय पाजके**

**प्राबोधि तन्मोक्षचतुष्टयप्रदम् ।**

**रामेण नो सार्ष्टिदमित्यसौ मरुत्**

**तीर्थं चकारेति ममावभासते** ॥ [सं.प] इति परशुरामेण चत्वारि तीर्थानि वासुदेवेन तीर्थमेकं आहत्य पञ्चतीर्थानि साधकानां मुक्तिप्रदानि सन्ति ।

पाजकस्य परितः प्रदक्षिणीकृत्य तीर्थानि पश्यामश्चेत् आनन्दातिशयं अनुभवामः । पर्वतस्य सानुप्रदेशेऽपि तीर्थं विद्यते । तत् धनुस्तीर्थम् । ग्रीमष्मकालेऽपि जलक्षामः न भवति । परन्तु गमनं अतीव क्लेशदायकम् । मार्गे सूचनाफलकं नास्ति । जनसदागतिसूचितवर्त्मना एव यात्रा करणीया ।

अयं फलितार्थः । सज्जनानां संरक्षणायैव अस्मिन् प्रदेशे पञ्चतीर्थानि निर्मितानि । तथाऽपि सामान्यजनाः इदानीमपि न जानन्त्येव । तेषामपि सौकर्याय विशेषव्यवस्था करणीया । बहुदूरे एकं एकं तीर्थं वर्तते । तत्रत्याः न सम्यक् मार्गदर्शनं कुर्वन्ति । अत एव सुव्यवस्था करणीया ।

**तौळवदेशस्य सप्तमोक्षदायकक्षेत्राणि**

तौळवप्रदेशे सप्तमोक्षदायकक्षेत्राणि प्रसिद्धानि । तथा हि –

**"रौप्यपीठं कुमाराद्रिः कुम्भासी च ध्वजेश्वरः ।**
**क्रोडगोकर्णमूकाम्बाः सप्तैताः मोक्षदायिकाः"**

इति सप्तक्षेत्राणि प्रसिद्धानि ।

तत्र तावत् गोकर्णक्षेत्रं उत्तरकन्नडजिल्लायां विद्यते । सुब्रह्मण्यक्षेत्रं दक्षिणकन्नडजिल्लायां वर्तते । उडुपिजिल्लायां पञ्चक्षेत्राणि सन्ति ।

**[1] रजतपीठपुरम्**

रजतपीठपुराधीशः भगवान् श्रीअनन्तेश्वरः तौळवमण्डले कुलाधीशः । चतुर्युगमूर्तिः ।

**"पूर्वेऽपि कर्दमपराशरपाण्डुमुख्याः**
**यत्सेवया गुणगणाढ्यमपत्यमापुः ।**
**तं पूर्णसद्गुणतनुं करुणामृताब्धिं**
**नारायणं कुलपतिम् शरणं व्रजेम"** [मध्व–2–18] इति काव्ये वर्णितम् ।

सत्सन्तानार्थं अयम् देवालयः सुविख्यातः । कर्दम–पराशर–पाण्डुमुख्याः गुणगणाढ्यं अपत्यं अस्य अनन्तेश्वरस्य सेवया एव अनुग्रहरूपेण प्रापुः ।

तौळवानां जनानां क्षिप्रप्रसाददः अयमेव । अस्य सन्निधौ मध्यगेहभट्टः पत्न्या समं तपस्तेपे ।

अयं फलितार्थः । श्रीअनन्तेश्वरदेवालयः गजपृष्ठाकारे विराजते । तौळवमण्डले तन्त्रागमनियमे एव निर्मिताः देवालयाः । आगमं दूरीकृत्य देवालयस्थापनं नास्त्येव । अपि च सर्वे देवालयाः सामान्यतः सहस्राधिकवर्षीयाः । ऋषयः मुनयश्च देवाश्चापि पूजां विधास्यन्ति यत्र तादृशाः देवालयाः परमकारणिकाः विद्यन्ते । तत्र च देवालयस्य आकारे बहुवैशिष्ट्यं पश्यामः।

आकारे एवं वर्गीकरणम् वर्तते –

1. गजपृष्ठाकारः 2.चतुरस्राकारः 3.दीर्घचतुरस्राकारः 4.आयताकारः तथा वृत्ताकारः ।

अस्मिन् तौळवमण्डले गजपृष्ठाकारे वर्तमानाः देवालयाः एते –

1.कोटग्रामस्य हिरेमहालिङ्गेश्वरदेवालयः 2.ब्रह्मावर महालिङ्गेश्वरदेवालयः

3.हेजमाडि महालिङ्गेश्वरदेवालयः 4.पुत्तूरु महालिङ्गेश्वरदेवालयः

5.बारकूरु महालिङ्गेश्वरदेवालयः 6.पञ्ज महालिङ्गेश्वरदेवालयः

7.अडूरु महालिङ्गेश्वरदेवालयः 8.बंट्र महालिङ्गेश्वरदेवालयः

9. विट्ल महालिङ्गेश्वरदेवालयः 10 कारिञ्ज महालिङ्गेश्वरदेवालयः

इति । एते अत्यन्तप्राचीनाः अत्यन्तकारणिकाः देवालयाः । तत्र च कारिञ्जदेवालयः गजपृष्ठाकारदेवालयेषु विभिन्नतां भजते । प्राकृतिकसौन्दर्यपूर्णे पर्वते उपरिभागे निर्मितः वर्तते । देवालयम् ये गमिष्यन्ति ते निश्चयेन आनन्दं अनुभवन्त्येव ।

तौळवमण्डले सर्वेषु देवालयेषु पूजादिवैदिककार्यक्रमाः भवन्ति । तथैव महान्नदानमपि भवति ।

शास्त्रग्रन्थेषु क्षेत्राभिवृद्धिनिमित्तं सूत्रपञ्चकं प्रतिपादितम् –

**आचार्यतपसा आम्नाय जपेन नियमेन च** ।

**उत्सवेनान्नदानेन क्षेत्रवृद्धिस्तु पञ्चधा** ॥ इति ॥

"प्रतिमायान्तु सान्निध्यं अर्चकस्य तपोबलात्" इति आर्षवचनं सुप्रसिद्धम् ।

**[2] कुमाराद्रिः**

तौळवमण्डलस्य सप्तक्षेत्रेषु द्वितीयं क्षेत्रं श्रीसुब्रह्मण्यक्षेत्रम् । इदं शेषपर्वतस्य कुमारपर्वतस्य च मूले वर्तते । कर्नाटकस्य प्रसिद्धयात्राक्षेत्रञ्च । उप्पिनङ्गडि[ಉಪ್ಪಿನಂಗಡಿ] अथवा पुत्तूरुग्रामस्य[ಪುತ್ತೂರು] समीपे अस्ति । स्कन्द–नागाराधनाय विशिष्टं क्षेत्रम् । तत्रैव स्कन्दः प्रादुर्बभूव । सा गुहाऽपि अत्र अस्ति । लक्षाधिकाः भक्ताः सर्पसंस्काराय आगमिष्यन्ति । स्कन्दपुराणस्य सनत्कुमारसंहितायां अस्य वर्णनं वर्तते । धारानद्याः तटे कुमारस्कन्दः तारकासुरं हत्वा स्वशक्त्यायुधं अस्यां नद्यां संप्रोक्षितवान् । तेन "कुमारधारा" इति नाम अभूत् । भारतस्य अष्टोत्तरशतशैवक्षेत्रेषु इदं क्षेत्रमपि एकम् । पूर्वं "कुक्केपुरम्" इत्यासीत् । श्रीशङ्कराचार्यैः विरचिते सुब्रह्मण्यभुजङ्गप्रयातस्तोत्रे "**त्रिलोकप्रशस्तं सुकुक्केपुरस्थम्**" तथैव "**भवव्याधिभङ्गं भजे कुक्केलिङ्गम्**" इति निरूपितमस्ति । क्रि.श.नवमशतमानस्य शासनेऽपि एवमेव अस्ति । विंशतिशतमानानन्तरं सुब्रह्मण्यम् इति व्यवहारः । तदुभयं नाम स्वीकृत्य इदानीं "कुक्के सुब्रह्मण्यम्" इति प्रसिद्धं नाम बभूव । गरुडभीत्या खिन्नः वासुकिः कुमारपर्वते शिवलिङ्गं प्रतिष्ठाप्य पूजयामास इति स्कान्दपुराणे वर्णितम् । क्षेत्रस्यास्य सेवनेन चर्मरोगादीनां उपशमनं भवति [5] ।

अत्र दर्पणतीर्थः इति तीर्थः विद्यते । मध्वानुजः श्रीविष्णुतीर्थः श्रीअनिरुद्धतीर्थाय दर्पणम् अक्षयपात्रञ्च अस्मिन्नेव तीर्थे प्रेषयामास । अत एव दर्पणतीर्थः इति नाम । विजयनगर–मैसूरुराजानः दानधर्मादिकार्यं अकुर्वन् इति ताम्रशासनैः ज्ञायते ।

श्रीमध्वाचार्यः सञ्चारक्रमेण सुब्रह्मण्यं आजगाम । तदा तत्र श्रीनरसिंहभट्टाचार्यः मुख्यस्थः आसीत् । तयोर्मध्ये तत्ववादचर्चा प्रचलति । अन्ते पराजितः भट्टाचार्यः सुब्रह्मण्यमठं श्रीनरसिंहप्रतिमाञ्च अदात् [6] । तदा श्रीमध्वाचार्यः तस्मिन् मठे स्वानुजं विरक्तं दान्तं श्रीविष्णुतीर्थं अभ्यषेचयत् । बदर्यां भगवता वेदव्यासेन प्रदत्तं चतुश्चत्वारिंशदधिकशतशाळग्रामसन्निधानोपेतं अभेद्यं सम्पुटं व्यासमुष्टिं च तत्र स्थापयामास । [7] तदारभ्य श्रीसुब्रह्मण्यक्षेत्रे सुब्रह्मण्यमठः प्रावर्तत । इदानीमपि मध्वानुजः श्रीविष्णुतीर्थः अस्मिन्नेव कुमारपर्वते अस्ति [8] । श्रीसुब्रह्मण्यमठः परमपूज्यानां श्री श्री विद्याप्रसन्नतीर्थश्रीपादानां आध्यक्षे जीर्णोद्धारकार्यक्रमः महता वैभवेन सम्पन्नः । अस्मिन् मठे मध्वपूजितः श्रीलक्ष्मीनरसिंहमूर्तिः–अभेद्यसम्पुटशालिग्रामः–व्यासमुष्टिश्च वर्तते ।

अयं फलितार्थः । तौळवमण्डले सामान्यतः बहवः देवालयाः नदी–काननम्–पर्वतः इत्यादिप्रदेशेषु वर्तन्ते । बृहत्सम्हिताग्रन्थे एवम् प्रतिपादितम् –

**वनोपान्त–नदी–शैल निर्भरोपान्तभूमिषु ।**

**रमन्ते देवता नित्यम् पुरेषु ध्यानवत्सु च ॥** इति । अत एव अस्मिन् कुमारपर्वतस्य रमणीयपरिसरे देवाधिदेवाः श्रीविष्णुतीर्थमहापुरुषाः अपि अनुग्रहोन्मुखाः निवसन्ति ।

अत एव अस्मिन् क्षेत्रे ब्रह्मणानां भोजनानन्तरं मडेस्नानं [ಮಡೆಸ್ನಾನ] आचरन्ति । ब्राह्मणानां भोजनपत्रेषु दिव्यसान्निध्यं वर्तते । अतः मडेस्नानसेवया कुष्ठादिचर्मरोगाः निवार्यन्ते । अत एव तीर्थप्रबन्धे –

**सुब्रह्मण्यस्य महिमा वर्णितुं केन शक्यते ।**

**यत्रोच्छिष्टमपि स्पष्टं श्वित्रिणः शोधयत्यहो ॥** [ती.प्र.1.37] इति वर्णयामास । अतेन यात्रार्थम् आगच्छन्तः वयं भगवत्सन्निधानोपेतं सरिसरम् संरक्षामः चेदेव यात्रा फलप्रदा भवति ।

**[3] कुम्भासी**

कुम्भासीक्षेत्रं राष्ट्रीयमुख्यमार्गे कोटेश्वरक्षेत्रस्य समीपे विराजते । इदं सप्तक्षेत्रेषु अन्यतमम् । पर्वतस्य अधो भागे जलमध्ये अस्ति । इदं हरि–हरक्षेत्रम् । त्रेतायां इदं "मधुवनम्" इति, कृतयुगे "हरि–हरक्षेत्रम्" इति , द्वापरे "गौतमाश्रमः" इति, कलियुगे "कुम्भासी" इति स्कन्दपुराणे वर्णितम् । कुम्भ इत्यसुरः गौतमस्य मुनेः यज्ञस्य भंगं अकरोत् । तदा विनायकस्य संकल्पेन भीमः खड्गरूपेण तं असुरं अहनत् । अत एव इदं क्षेत्रं "कुम्भासि" इत्येव नाम्ना व्यवहरन्ति । देवानां प्रार्थनया विनायकः अत्रैव मधुवने सन्निहितः अभवत् । अयं मध्यमगात्रीयः चतुरस्राकारदेवालयः । देवालयस्य परितः सरः वर्तते । दक्षिणभागे सूर्यपुष्करिणी इति,उत्तरे चन्द्रपुष्करिणी इति तस्य नाम । मध्ये देवायतनम् । [क्रि.श.1552] शासननानुसारं हरिहरौ कूपे विराजेते । तयोः साक्षात् दर्शनं न भवति । अत्र प्रतिवर्षं मकरमासे उत्सवः भवति । सिंहमासे पुष्पपूजा, कार्तिके दीपोत्सवः भवति ।

अस्य देवालयस्य अग्रतः सूर्यदेवालयः अस्ति । अत्यन्तप्राचीनदेवालयः जीर्णोद्धारेण वैभवं प्राप्तः । चतुर्भुजः सूर्यः विशालसूर्यमण्डले विराजते ।

अत्रैव श्रीसोदेमठः वर्तते । पूर्वं "कुम्भासिमठः" इत्येव श्रीसोदेमठस्य नाम । श्रीवादिराजतीर्थश्रीपादानां जन्मभूमिः "हूविनकेरे" इति प्रदेशः अत्रैव अनतिदूरे वर्तते । श्रीवादिराजतीर्थाश्रीपादानां अनन्तरं सोदेमठः इत्यभवत् । पर्वतस्य उपरि श्रीमहागणपतिदेवालयः वर्तते । "आनेगुड्डे" इति अस्य प्रदेशस्य नाम । अत्यन्तप्रसिद्धः यात्राप्रदेशः इदानीम् । अत्रस्थं विनायकं पाण्डवाः भेजिरे । भाविसमीरश्रीवादिराजगुरवः तीर्थप्रबन्धे –

**"भासि कुम्भासिसंज्ञ त्वं क्षेत्रं श्रीशगिरीशयोः ।**

**यत्र कुम्भासुरस्य असिरभासीत् द्रौपदीपतिः"**

**गुहामुखं तीर्थनेत्रम् वेदस्थानं वनायनम् ।**

**यत्यर्थं गौतमक्षेत्रं चित्रं तत्तनुवद्बभौ ॥** इति तीर्थप्रबन्धे अवर्णयन् ।

**[4] ध्वजेश्वरः**

उडुपि – कुन्दापुर राष्ट्रीयप्रधानमार्गे कोटेश्वर इति ग्रामः अस्ति । अत्र अत्यन्तप्राचीनदेवालयः वर्तते । तौळवमण्डलस्य सप्तमोक्षदायकक्षेत्रेषु अयमपि एकः । इतिहासप्रसिद्धः देवालयः । कोटितीर्थः इति पुष्करणी अस्ति । पद्मपुराणस्य पुष्करखण्डे अस्य क्षेत्रस्य महिमा वर्णिता ।

एकदा ब्रह्मा देवान् अनुग्रहीतुं भगवन्तं तपः तेपे । तदा तस्य कमण्डलूदकेन सरोवरं निर्मिमे । अश्वत्थवृक्षञ्च प्रतिष्ठापयामास । तपसः प्रभावः सर्वत्र व्याप्तः । तदा ज्योतिर्मयः प्रकाशः अभिव्यक्तः । तद्द्रष्टुं ब्रह्मा अपि न समर्थः । सा तेजोराशिः कोटिलिङ्गाकारेण परिवर्तिता । युगान्तरे पुनःअपरिमितैः ऋषिभिः तपसा अन्विश्य पूजितः । चेदीदेशस्य राजा वसुः तीर्थयात्रां कुर्वन् अत्र आगतः ।

मुनिना नारदेन उपदिष्टः कोटीश्वरं संसेव्य शिलामयं देवालयं निर्मितवान् । सन्तुष्टः शिवः अस्मिन् कोटितीर्थे सर्वतीर्थानां सन्निधानं स्थापितवान् । शासनेऽपि "कोटीश्वरः" इत्येव निरूपितम् । "ध्वजेष्वरः" इति नामान्तरम् । अत्रत्य शासनानुसारं श्रीश्रुङ्गेरीसंस्थानस्य आधिपत्यं अत्र आसीत् इति ज्ञायते । मठस्य देवालयस्य च सम्बन्धः अविनाभावसम्बन्धः । कार्तिके मासि दशदिनात्मकः रथोत्सवः[ಕೊಡಿ ಹಬ್ಬ] प्रचलति । अस्मिन् तीर्थे ये स्नान्ति मनुजाः ते सर्वरोगरहिताः भवन्ति ।

**चारुकोटीश्वरस्थानं शोभते यत् पुरत्रयम् ।**

**पुरारिरिव निर्जित्य ध्वजेनाद्यापि जृम्भते ॥**

**नमस्ते शितिकण्ठा कोटिसङ्ख्यर्षितोषणात् ।**

**यः कोटीश्वरसंज्ञोऽभूः स किं नैकर्षिकामधुक् ॥** इति श्रीवादिराजतीर्थः तीर्थप्रबन्धे अस्तौत् । इदानीं जीर्णोद्धारेण विराजते ।

**[5] क्रोडाश्रमः**

कुन्दापुर–शिवमोग्गमुख्यमार्गे शङ्करनारायणक्षेत्रं वर्तते । तौळवमण्डलस्य सप्तमोक्षदायकक्षेत्रेषु इदमपि अन्यतमं क्षेत्रम् । क्रोडगिरिरिति ख्यातं क्षेत्रमिदं पुण्यक्षेत्रमपि । क्रोडमुनेः सम्बन्धात् "क्रोडाश्रमः" इति नाम । गर्भगृहे स्वयम्भूलिङ्गस्य परितः "सिद्धामृततीर्थम्" विद्यते । देवालयस्य अग्रतः भगवता परशुरामेण निर्मितं "भार्गवतीर्थम्" पश्चिमे दिशि "नागतीर्थम्" आग्नेये "दुर्गातीर्थम्" दक्षिणे "अगस्त्यतीर्थम्" कपिलतीर्थञ्च विद्यते । द्राविडशैल्यां निर्मितः शिलामयः देवालयः । एकनाळपद्मद्वयवत् शङ्करनारायणौ अत्र पूज्येते । अत्र अष्टबन्धप्रतिष्ठाक्रमः नास्ति । अत एव अभिषेकजलं अधः गच्छति । पुराणेष्वपि सम्बद्धं क्षेत्रम् । पद्मपुराणस्य पुष्करखण्डे क्रोडमहिमा वर्णिता ।

पूर्वं खररट्टनामानौ असुरौ शिववरेण दृप्तौ । शिववरस्तु एकदेवेन सम्हारः मा भूयात् इति । तेन मदोन्मतौ तौ सर्वान् पीडितौ । असुराभ्यां पीडिताः ऋषयः निर्जने वने तपश्चक्रुः । क्रोडमुनिः शङ्करनारायणे "विष्णुमहेश्वरौ", अगस्त्यमुनिः [ಹೊಳೆ] होळेशङ्करनारायणे "संकर्षण–अघोरौ, जमदग्निमुनिः [ಬೆಳ್ವೆ] बेळ्वेवने "अनिरुद्धवामनौ", लोमशमुनिः [ಆವರ್ಸೆ] आवर्सेवने "वामदेवतत्पुरुषौ", माण्डव्यमुनिः [ಅಮಾವಾಸ್ಯೆಬೈಲು] माण्डव्यां "सद्योजातप्रद्युम्नौ" तपस्तेपिरे । तेन सुप्रसन्नौ शङ्करनारायणौ पञ्चस्थळेषु आविर्भूय दुष्टान् अहनताम् । ऋषीणां प्रार्थनया सदा दिव्यदर्शनं अदाताम् । एवं क्रोडमुनेः तपसः प्रभावात् "क्रोडगिरिः–क्रोडाश्रमः" इति ख्यातिं आप ।

मकरमासे द्वितीयादिने महारथोत्सवः भवति । धनुस्सङ्क्रमणे "मुहूर्तबलिः" इति उत्सवं आचरन्ति । अस्मिन् देवालये महती घण्टा वर्तते । मैसूरुसंस्थानस्य राजा टिप्पुसुल्तान् दिग्विजयेन सन्तुष्टस्सन् इमां घण्टां देवाय समर्पितवान् । तस्याः घण्टायाः शब्दः बहुदूरं श्रुणोति । अभिमुखकार्यक्रमाः सर्वदा भवन्ति । श्रीवादिराजतीर्थश्रीपादाः तीर्थप्रबन्धे

**"क्रोडयोगीश्वरक्षेत्रं भाति शुक्तिमतीतटे ।**

**सतां मता द्विता यत्र स्पष्टोमेशरमेशयोः"**

**श्रुतिशतवर्णितचरितम् यतिहृन्निरतम् यथेष्टगुणभरितम् ।**

**किङ्करवरदमनिन्द्यम् शङ्करनारायणं वन्दे ॥**

**पीनोरुकटिसुनाभम् ध्यानार्होरःस्थिताहिफणहारम् । शङ्खाभ्रवर्णमनघम् शङ्करनारायणं वन्दे ॥** इति श्रीवादिराजतीर्थः वर्णयामास ।

## [6] गोकर्णम्

सप्तमोक्षदायकक्षेत्रेषु अतिप्रसिद्धं क्षेत्रम् गोकर्णक्षेत्रम् । उत्तरकन्नडजिल्लायां वर्तते । समुद्रतीरे विराजते । पुराणेष्वपि वर्णितम् । त्रेतायां रावणः तपसा शिवं आराध्य आत्मलिङ्गं प्राप्नोत् । अत्यत्त्साहेन तं लिङ्गं स्वीकृत्य लङ्कां प्रस्थितवान् । तदा देवाः विघ्ननिवारकं गणेशं लङ्कागमनाय निरोद्धुं प्रार्थनां चक्रुः । देवानां प्रार्थनया विनायकः ब्रह्मचारिरूपेण आजगाम । रावणस्तु सन्ध्यासमयं ज्ञात्वा समुद्रतीरे सन्ध्यावन्दनं कर्तुं उद्युक्तः । तत्रैव समीपे स्थितस्य विनायकस्य हस्ते तं लिङ्गम् दत्वा जगाम । जगत्कल्याणाय विनायकः तं लिङ्गं भूमौ संस्थाप्य अदृश्यः अभूत् । सन्ध्यावन्दनं विधाय आगतः रावणः भूमौ स्थापितं लिङ्गं दृष्टा चिन्ताक्रान्तः अभवत् । लिङ्गं उद्धर्तुं बहुयत्नं अकरोत् । तेन यत्नेन लिङ्गः गोरूपं अभवत् । तेन गोकर्ण इति नाम । परन्तु उद्धर्तुं नैव अशकत् । अत एव शिवः अत्र महाबलेश्वरः इति नाम्ना विख्यातः ।

फाल्गुणे मासि प्रथमे दिने वार्षिकमहारथोत्सवः भवति ।

श्रीवादिराजतीर्थः तीर्थप्रबन्धे

**“दुष्टानां विघ्नकर्ता सुचरितसुजनस्तोमविघ्नापहर्ता**

**तस्माद्विघ्नाधिपोऽहम् मत इति सुधियां स्पष्टमाज्ञापनाय ।**

**पौलस्ते छान्तरायः सुरमुनिनिकराभीष्टसंप्राप्त्युपायः**

**श्रेयो विघ्नाधिराजः प्रदिशतु सततं भूरिगौरीतनूजः”** इति स्तोत्रं चकार ।

## [7] मूकाम्बिका

तौळवमण्डलस्य सप्तमोक्षदायकक्षेत्रेषु कोल्लूरुक्षेत्रं अन्यतमं महत्वपूर्णं सिद्धिक्षेत्रम् । अत्र देवी त्रिगुणरूपिणी । देवालयस्य पार्श्वे सौपर्णिका नदी प्रवहति । कुन्दापुरतः श्रुङ्गेरीमार्गे वर्तते इदं क्षेत्रम् । पुराणेषु "कोलापुर" इति नाम । स्कन्दपुराणे विस्तारेण निरूपितम् । कोलमहर्षिः पराशक्तिं तपश्चकार । तेन कोलापुर इति नाम । देवी पराशक्तिः दैत्यं करिहासुरं मूकं कृत्वा अहनत् । तेन कोलापुर इत्यपि नाम अभवत् । अत्र अधिदेवी दुर्गा लिङ्गरूपिणी । क्षेत्रं ज्योतिर्लिङ्गक्षेत्रम् । अत्रत्य वास्तुशिल्पः केळदिनायकानां कालीनः । देवालये विजयनगरकालस्य केळदिसंस्थानस्य च शासनानि ताम्रपत्राणि सन्ति । विशेषतः इदानीं केरळीयभक्तानां पुण्यक्षेत्रम् । प्रतिदिनं त्रिकालपूजा प्रचलति । नवरात्रौ विशेषोत्सवः भवति । मीनमासे मूलानक्षत्रे वार्षिकमहारथोत्सवः भविष्यति ।

अस्य क्षेत्रस्य पावनगङ्गा सौपर्णिका नदी । कोडचाद्रिपर्वतात् इयं नदी प्रवहति । जनाः एनां "रोगनिवारिणी" "पापनाशिनी" इति भावयन्ति । चतुषष्ठितीर्थानां सन्निधानं विद्यते । अनतिदूरे कोडचाद्रिपर्वतः अस्ति । "सञ्जीविनीपर्वतः" इति अस्य पर्वतस्य नामान्तरम् । पर्वतस्योपरि "अम्बावनम्" इति वनं वर्तते । तत्र अदृश्यरूपेण देवीसन्निधानं अस्ति । तत्रैव "चित्रमूलम्" "सर्वज्ञपीठम्" वर्तते । श्रीशङ्कराचार्यः अस्मिन् प्रदेशे तपः आचर्य सिद्धिं प्राप इति इतिहासः । कोल्लूरुक्षेत्रं इदानीं विश्वविख्यातम् । प्रतिदिनं सहस्राधिकाः भक्ताः आगमिष्यन्ति ।

श्रीवादिराजतीर्थः तीर्थप्रबन्धे

**“मूकाम्बिका कृपालोकात् आकाङ्क्षितफलप्रदा ।**

**मूकानकृत मे शतॄन् एकान्तिकजनप्रिया”**

**क्वचित् पृथिव्यां परितश्चरन्ती नभःस्थलं चापि मुहुर्व्रजन्ती ।**

**विपक्षविध्वंसविधौ स्फुरन्ती कात्यायनी कन्दुकवद्विभाति ॥** इति अस्तौत् ।

अयं फलितार्थः । तौळवमण्डलस्य सप्तक्षेत्राणि मोक्षदायकानि । तेषां सन्दर्शनेन अन्तःकरणशुद्धिः भवति । रजतपीठपुरं विहाय मध्वविजये एतेषां क्षेत्राणां वर्णनं नास्ति । वस्तुतः सर्वाणि क्षेत्राणि मध्वविजये न वर्णितानि इति कविना प्रतिज्ञातम् । श्रीमध्वाचार्यः गोवाप्रदेशतः रजतपीठपुरागमने एतेषां क्षेत्राणां सन्दर्शनं निश्चयेन कृतवानेव । अत एव कविः

**“संक्षिप्नु वाक्ये मयि मन्दबुद्धौ सन्तो गुणाढ्याः करुणां क्रियासुः”** इति प्रार्थितवान् ।

## अनन्तेश्वरस्य ध्वजस्तम्भः

विज्ञानभानुमति कालबलेन लीने सति खिन्नहृदः ब्रह्मरुद्रादयः देवाः मुकुन्दं शरणं जग्मुः । देवानां प्रार्थनया त्रियुगहूतिः स्मेराननः भगवान् सकार्यवीर्यम् वायुं भुवौ अवताराय आदिदेश ।

**“वेदान्तमार्गपरिमार्गणदीनदूनाः**

**दैवीः प्रजाः विशरणाः करुणापदं नः ।**

**आनन्दयेः सुमुख भूषितभूमिभागो**

**रूपान्तरेण मम सद्गुणनिर्णयेन”** [मध्व–2–3] इति भगवान् अभाषत ।

वायुस्तु भगवतः उज्वलवर्णम् आदेशमौलिमणिं बद्धाञ्जलिस्सन् मूर्ध्ना दधार । स्वजनान् कल्याणाय अवतर्तुं ऐच्छत् ।

एकदा रजतपीठपुरे सङ्क्रमणमहोत्सवः आसीत् [9] । सज्जनप्रीतये भगवान् शुभसूचनाय कञ्चित्पुरुषं आविवेश । प्रकृत्या एव अकुशलः पुरुषः । तस्मिन् आविष्टस्सन् देवालयस्य उन्नतशिखरं आरुरोह ।ध्वजस्तम्भस्योपरि ननर्त ।

रङ्गान्तरे नट इव विस्मयस्वरूपः भूत्वा "उत्पत्स्यते जगति विश्वजनीनवृत्तिः विश्वज्ञ एव भगवान् अचिरादिह" [मध्व–2–8] इति उदघोषयत् । श्रीअनन्तेश्वरस्य सन्निधाने अग्रतः एव दृष्यते ध्वजस्तम्भः । तं प्रदक्षिणीकृत्यैव देवालयं प्रविशन्ति भक्ताः ।

## मध्यगेह भट्टः

तस्मिन् काले मध्यगेहभट्टः इति ख्यातनामा द्विजः आसीत् । एनं विनीतं जनाः "भट्टः" अभिवदन्ति स्म । तस्य विवरणम् "विज्ञातभारतपुराणमहारहस्यं यं भट्ट इत्यभिवदन्ति जना विनीतम्" [मध्व.2.14] कविः व्याचष्ट । एषः महाभागः गोविन्दसुन्दरकथया जनानां इन्द्रियाणि आनन्दयत् । तथैव अनन्तेश्वरस्य पादसेवकानां देवानां इन्द्रियाण्यपि आननन्द ।

**"गोविन्दसुन्दरकथासुधया स नृणाम्**

**आनन्दयन्न किल केवलमिन्द्रियाणि ।**

**किन्तु प्रभो रजतपीठपुरे पदाब्जं**

**श्रीवल्लभस्य भजतामपि दैवतानाम्"** [मध्व.2.15] इति भगवत्कथया भगवानपि सन्तुष्टो बभूव । अस्मिन्नेव देवालये द्विषडब्धकालम् पत्न्या वेदवत्या समं मध्यगेहभट्टः पुत्रसन्तानार्थं तीव्रं पयोव्रतं चकार । तपसा सन्तुष्टः भगवान् अनुग्रहं अकरोत् । भगवतः अनुग्रहेण सा पत्नी गर्भं बभार ।

**"कान्तादृतौ समुचितेऽथ बभार गर्भं**

**सा भूसुरेन्द्रदुहिता जगतां सुखाय"** [मध्व.2.23]इति ।

भगवतः पदाब्जं भजन्ती देहं अधिकं विमलीचकार । श्रीअनन्तेश्वरस्य परमानुग्रहेण वायुरेव मध्यगेहभट्टस्य भवनं ययौ । तत्र गर्भे स्थितं जीवं देहात् निष्कास्य तं देहं विवेश । "राजेव सत्पुरवरं भुवनाधिराजो निष्कासयन् परमसौ भगवान् [10] विवेश" [मध्व.2.25] वायुः आविवेश ।

## जातस्य नामकरणम्

मध्यगेहभट्टः कुलस्वामिनम् श्रीमदनन्तेश्वरं संसेव्य पाजकस्थस्वमन्दिरं आजगाम । स्वपुत्रजन्मवार्तां अश्रुणोत् । मुकुन्ददयां प्रष्टूय स्वगृहं प्रविष्टः इन्दुवक्त्रं स्वसुतं ददर्श । तेन महदानन्दं अवाप । श्रीमदनन्तरेश्वरस्य अनुग्रहेण जातस्य शिशोः नामकरणात्मकः संस्कारः [11] विधेयः इति निश्चिनोति । ततश्च सुमुहूर्ते स्वपुत्राय "वासुदेव" इति नामकरणम् अकरोत् । तच्च नाम सार्थकमेव अभवत् । यतो हि

**"ज्ञानार्थमेव यदभूत् असुदेव एषः**

**यद्वासुदेव पदभक्तिरतः सदाऽसौ ।**

**तद् वासुदेवपदमन्वदन् सुरेन्द्राः**

**तातेन यन्निगदितं सुतनामकर्त्रा** [मध्व–2.29] पित्रा उक्तं वासुदेव इति

नाम सुरेन्द्राः अपि अन्ववदन् । वासुदेवः इत्यत्र "वा" गतिगन्धनयोः इति धातोः गतिवाचकत्वात् । "ये ये गत्यर्थकाः ते ते ज्ञानार्थकाः" इति नियमात् वार्थं ज्ञानार्थं जातः असुदेवः "वासुदेवः" इति फलितः अर्थः । तथा हि मुख्यप्राणो हि (असुदेवः) मोक्षकारणस्य तत्त्वज्ञानस्य (वा) उपदेशार्थमेव भुवि अवततार । अपि च मोक्षप्रदस्य वासुदेवरूपिणः भक्तत्वाच्च "वासुदेव" इति नाम सार्थकम् अभवत् ।

## गोप्रदः मूडिल्लायः

मध्यगेहभट्टः अध्यात्मज्ञानेन सम्पन्नः आसीत्, न तु धनेन । तस्मात् तद्गृहे पानीयार्थं क्षीरमपि दुर्लभम् आसीत् । तदेतादृशीं दुरवस्थां पूर्वगेहभट्टः (चिट्पाडुनामकप्रदेशस्थः मूडिल्लायबळ्ळालुनामधेयः) अपश्यत् । रजतपीठपुरे पूर्वभागे पूर्वालयः [**ಮೂಡಿಲ್ಲಾಯರು**] इति । दक्षिणभागे दक्षिणालयः [**ತೆಂಕಿಲ್ಲಾಯರು**] इति । पश्चिमभागे पश्चिमालयः [**ಪಡಿಲ್ಲಾಯರು**] इति । उत्तरदिग्भागे उत्तरालयः [**ಬಡಕಿಲ್ಲಾಯರು**] इति प्रदिद्धः । पूर्वालयः सः सकललक्षणोपेतस्य वासुदेवस्य लीलया आकृष्टः आसीत् । तस्मात् वासुदेवस्य क्षीरपानार्थं मध्यगेहभट्टाय गां दास्यामि इति निश्चिकाय । ततः यथाविधि मध्यगेहभट्टाय गोदानम् अकरोत् । तदनेन गोदानेन पूर्वगेहभट्टः प्रभूतं पुण्यम् अवाप । गोदानजन्येन पुण्येन स्वपुत्रस्य पुत्रतया जनित्वा श्रीमध्वाचार्येभ्यः मोक्षकारणीभूतं सच्छास्त्रस्य श्रवणम् अकरोत् ।

**"पातुं पयांसि शिशवे किल गोप्रदोऽस्मै**

**पूर्वालयः स्वसुतसूनुतया प्रजातः ।**

**निर्वाणहेतुमलभिष्ट परात्मविद्यां**

**दानं धृवं फलति पात्रगुणानुकूल्यात्"** [मध्व–2–29] इति वर्णितम् ।

अतः गोदानेन तत्वज्ञानं प्राप्तुं शक्यते । गोप्रदस्तु स्वसुतसूनुत्वेन सञ्जातस्सन् मध्वशास्त्रश्रवणेन क्रमशः मुक्तो बभूव । तदेवं सत्पात्राय कृतं श्रेष्ठपदार्थस्य दानं नूनं महत्फलं विदधाति इति अनेन वृत्तान्तेन ज्ञायते ।

तदेवं उपकारं मनसि निधाय यत्याश्रमस्वीकारानन्तरं श्रीमध्वाचार्यः पूर्वालयं आजगाम । गोप्रदस्य पुत्रः आसीत् । "गरुडारूढं श्रीलक्ष्मीनारायणविग्रहं" दत्वा अनुजग्राह ।

इदानीमपि चित्पाडिप्रदेशे विद्यते इदं गृहम् । पार्श्वे एव श्रीनिवासदेवालयः विराजते । अत्र महावैभवेन जीर्णोद्धारकार्यक्रमः सुसम्पन्नः । पूर्वालयस्याऽपि जीर्णोद्धारः अभवत् । श्रीकृष्णपूजादीक्षार्थं सङ्कल्पिताः तीर्थयात्रारताः यतयः अत्र आगत्य मध्वप्रदत्तभगवतः पूजां कुर्वन्ति । अस्मै बल्लाळाय पर्यायकार्यक्रमार्थं आमन्त्रणं प्रयच्छन्ति । दर्शनीयः प्रदेशः ।

## सन्दळिकेपाडि – भूतपीडापरिहारः

बाल्यलीलां प्रदर्शयतः वासुदेवस्य त्रयः मासाः अभवन् । तस्मात् मध्यगेहभट्टः उपनिष्क्रमणसंस्कारार्थं शिशुम् अनन्तेश्वरदेवालयम् अनयत् । पूर्वं मध्यगेहभट्टः पयोव्रतं कृत्वा श्रीमदनन्तरेश्वरस्य अनुग्रहेण पुत्रमवाप । तस्मात् भगवदनुग्रहेण प्राप्तं फलं भगवते अर्पणीयम् इत्यनुसन्धानेन शिशुं देवालयम् अनयत् । "त्वदीयमेव गोविन्द तुभ्यमेव समर्पये" इत्येवं अग्रे श्रीमध्वाचार्यः उपदेक्ष्यति [12] । तदनेन कार्येण श्रीमध्वाचार्येण उपदिष्यमाणेषु वचनेषु अन्यतमं वचनं कार्यरूपमवाप इति ज्ञायते । सूर्योदायात् प्राक् प्रसरतः आलोकस्येव श्रीमध्वाचार्यस्य वचनम् उपदेशात् प्रागेव कार्यरूपम् अवाप । यस्मिन् प्रदेशे यस्मिन् सन्निधाने सेवा तस्मिन्नेव सन्निधाने समर्पणं करणीयम् इत्युपदेशः ।

स्वकुलदेवस्य भगवतः श्रीअनन्तेश्वरस्य सन्निधौ स्वसुतस्य आपत्सम्बन्धरहितां सम्पदं प्रार्थयित्वा स्वसुतेन परिवारजनेन च अन्वितस्सन् स्वभवनं प्रायात् ।

**नत्वा हरिं रजतपीठपुराधिवासं**
**बालस्य सम्पदमनापदमर्थयित्वा ।**
**साकं सुतेन परिवारजनान्वितोऽसौ**
**प्रायान्निशीथसमये निजमेव धाम ॥** [मध्व.232]

असौ भट्टः यदा प्रस्थितः तदा रात्रिकालः सम्प्राप्तः । भूतपिशाचादयः निशाचराः यत्र सञ्चरन्ति तादृशं अरण्यं सपरिवारः मध्यगेहभट्टः प्रविवेश । तदेवम् अरण्यं प्रविशति सति कश्चन पुरुषः रक्तं वमन् भूमौ निपपात । तत्र भूतविशेषः एकतमं अबाधत । तद्दृष्ट्वा "नूनमियं भूतचेष्टा इति" सर्वे भयभीताः बभूवुः । तथैव "अयं भूतः कथं शिशुबाधकः न अभवत् ?" इत्यपि साश्चर्यं समजनि । शिशुं वासुदेवं न तुतोद ।

**दोषेयुषाम् सममनेन वनेऽतिभीमे**

**तत्क्रीडितग्रह इहैकतमं तुतोद ।**

**उद्वान्तरक्तमवलोक्य तमभ्यधायि**

**केनाप्यहो न शिशुतुत् कथमेष इत्थम् ॥** [मध्व.2.33]

"भूतादयो हि प्रायशः दुर्बलान् शिशून् पीडयन्ति । अत एव ते बालग्रहाः इति कथ्यन्ते । एतादृशात् बालग्रहात् अवश्यं वासुदेवः रक्षणीयः" इति मध्यगेहभट्टः चिन्तितवान् । किन्तु शिशुरूपी वासुदेवः वायोः अवतारः इति ज्ञानं नासीत् । अत एव सर्वे परिवारगणाः शिशुरक्षणार्थम् भूतं प्रार्थयन्ति । वायोः अवताभूतत्वादेव शिशुं वासुदेवं पीडितुं भूतः असमर्थः आसीत् । एतदवसरे भूताविष्टः पुरुषः तत्रस्थान् परिवारगणान् उद्दिश्य "तदयं मध्यरात्रिकालः भूतादीनां निशाचराणां सञ्चारकालः । एतादृशसमये अत्र आगमनं दुस्साहसमेव । यद्यत्र लोकेश्वरोऽयं बालतमः न स्यात् तर्हि नूनं भवन्तः भूतानाम् आहारः भवेयुः" इत्यवदत् ।

**आविश्य पूरुषमुवाच महाग्रहोऽसौ**

**अस्मद्विहारसमयोपगतान् समस्तान् ।**

**यच्छक्तिगुप्तिरहितान् अलमस्मि हन्तुं**

**लोकेश्वरः स बत बालतमः किलेति** ॥ [मध्व–2–34] इति तद्वचनं श्रुत्वा सर्वेऽपि आश्चर्यचकिताः आसन् ।

अयं शिशुः अलौकिकशक्तिसम्पन्न इति अजानन् । तदेवं मध्वाचार्यः बाल्ये स्वीयं सामर्थ्यं प्रकटयामास । येषां गृहे श्रीमध्वाचार्याणां प्रतिमा, तदुपदिष्टाः ग्रन्थाः वा भवन्ति तत्र भूतपिशाचीदानां स्थितिरेव दुर्लभा इति अनेन वृत्तान्तेन ज्ञायते ।

अयं प्रदेशः उडुपि–अलेवूरु –पाजकमार्गे वर्तते । अस्य प्रदेशस्य नाम "**सन्दळिगेपाडि**" इति । इदानीं दुर्गा–नागालयः वर्तते । प्रशान्तवातवरणं सर्वान् आकर्षति । पिशाचादिपीडापरिहाराय बहवः भक्ताः तैलदीपप्रज्वलनं [13] कुर्वन्ति । इदानीमपि वनप्रदेशवत् रमणीयः वर्तते ।

## पाजकगृहे कुलित्थकुलभक्षणम्

कदाचित् वासुदेवस्य माता वेदवती कार्यान्तरार्थं परेषां गृहं गतवती । गमनकाले वासुदेवः निद्रामग्नः आसीत् । तस्मात् वेदवती स्वपुत्रीम् आहूय "कल्याणि! कार्यनिमित्तं किञ्चित्कालं बहिर्गच्छामि । तावत्कालं विश्वपरिपालकं वासुदेवं पालयतु" इत्यवदत् । ततश्च वेदवती निर्जगाम । किञ्चित्कालानन्तरं उद्बुद्धः बालः मातरं अनवेक्ष्य रोदनम् आरभत ।

**रोदे क्रियासमभिहारत एव वृत्ते**

**पोतस्य मातरि चिरादपि नागतायाम् ।**

**जग्राह बालमथ चैक्षत मातृमार्गं**

**साऽपि क्रियासमभिहारत एव बाला ॥** [मध्व.2.37]

वासुदेवस्य भगिनी शिशोः रोदनपरिहारार्थं नितरां प्रयत्नं कृतवती । किन्तु वासुदेवः रोदनात् निवृत्तः नाभवत् । प्रायशः बुभुक्षापीडितः शिशुः रोदिति इति मत्वा तद्भिगिनी आहारान्वेषणे प्रवृत्ता । किन्तु गृहे गवां आहारभूतान् पक्वान् कुलित्थान् विहाय अन्यत् किमपि नासीत् । तत्तदानीं मुग्धा वेदवत्याः पुत्री वासुदेवाय कुलित्थानेव आहारत्वेन प्रायच्छत् ।

**कर्तव्यमौढ्यमभिपद्य निरूप्य सा तम्**

**प्राभोजयत् खलु कुलित्थकुलं प्रपक्वम् ।**

**शीतं पयोऽपि सततं परिपाययन्ती**

**यस्योष्णरोगमतिवेलमशङ्कताम्बा ॥** [मध्व.2.38]

माता वेदवती हि शिशोः औष्ण्यं भवेत् इति शङ्कया शीतं पयः ददाति स्म । तदेतादृशशिशोः तत्पुत्री गवां भक्ष्यं प्रायच्छत् । वेदवत्यपि कार्यान्तरे मग्ना शिशुं न् अस्मरत् । कार्यान्ते च शिशोः स्मरणे सति उद्विग्ना अभवत् । परकृत्यसक्तायाः आत्मनः निन्दां स्वयमेव अकरोत् । यदा गृहम् आगतवती तदा पूर्णोदरं मन्दहासवदनं शिशुम् अपश्यत् । वेदवत्यपि "शिशुः बुभुक्षया किं न रोदनमकरोत" इति पुत्रीं अपृच्छत् ।

तदेवं मात्रा पृष्टा पुत्री प्रवृत्तं वृत्तान्तम् सर्वं आवेदयत् । तच्छ्रुत्वा वेदवत्ती क्रुद्धा भीता च सती स्वपुत्रीम् अभर्त्सयत् । पुत्रस्य आरोग्यं कामयमाना शिशवे मुहुः मुहुः स्तन्यपानम् अकरोत् । मध्यगेहभट्टोऽपि वृत्तान्तमेनं ज्ञात्वा पुत्रस्य

आरोग्यप्राप्त्यर्थं मन्त्रं जजाप । क्षीरसमुद्रमथनकाले उत्पन्नः हालाहलः मुख्यप्राणेन भक्षितः,जीर्णितश्च । तदा त्रिलोकजननी लक्ष्मी हालाहलविषे पीतेऽपि विस्मयं न अवाप । तादृशस्य मुख्यप्राणस्य अवतारस्य वासुदेवस्य कुलित्थभक्षणेन किमु भवेत् ? ।

तदेवं काले गच्छति सति वासुदेवः प्राक् रिङ्गणं ततः स्थितिं च चक्रे । ततः पद्भ्यां गमनम् आरेभे । वासुदेवस्य मुखतः प्रथमतः अस्पष्टतया निःसृता वाणी ततः स्पष्ठा अभवत् । तदेवं भुवनचेष्टस्य मुख्यप्राणस्य बालचेष्ठा सुमनसां कुतूहलजनिका आसीत् ।

अथेदानीं वासुदेवः एकवर्षीयः आसीत् । प्रतिदिनं प्रातःकाले गावः,वृषभाश्च ग्रासस्वीकाराय गोष्ठात् बहिरागत्य वने सुदूरं सञ्चरन्ति स्म । सूर्ये अस्तंगते सति पुनः गोष्ठं प्रविशन्ति स्म । तदेतत् दृष्ट्वा वासुदेवः कदाचित् प्रातःकाले कस्यचित् वृषभस्य निर्मलं पुच्छम् अवलम्ब्य तैः सह काननम् आविवेश । किञ्चित्कालानन्तरं वासुदेवः गृहे नास्तीति मातापितरौ विदित्वा भयभीतौ सञ्जातौ । इतस्ततः अन्वेषणे कृतेऽपि वासुदेवम् अलभमानौ चिन्ताक्रान्तौ सञ्जातौ । तदस्मिन्नवसरे “गोपुच्छावलम्बी कश्चन बालकः मया अरण्ये दृष्ट” इति तद्ग्रामस्थः कश्चन पुरुषः अवदत् । परन्तु तद्वचने मध्यगेहभट्टादयः विश्वासं न चक्रुः । सूर्ये अस्तंगते सति यथा कमलानि म्लायन्ति तथा मध्यगेहादीनां मुखवदनानि म्लायन्ति स्म । यदा गोवृषभादयः गोष्ठं प्राविशन् तदा तैः सह वासुदेवोऽपि गृहम् आजगाम [14] । गृहम् आगच्छन्तं पुत्रं दृष्ट्वा सर्वेऽपि सन्तुष्टाः अभवन् ।

**“चिन्तामणीन्द्रमिव चिन्तितदं दरिद्रः**

**विज्ञानमार्गमिव विष्णुपरं मुमुक्षुः ।**

**नष्टं च नन्दनमिति स्वजनोऽस्य लब्ध्वा**

**नाथस्य तस्य तमनुग्रहमेव मेने”** ॥ [मध्व–2–49] इति

पुत्रदर्शनं नाम भगवतः अनुग्रहमेव मेनिरे । कुलदेवस्य श्रीमदनन्तेश्वरस्य अनुग्रहेण स्वपुत्रः सुरक्षितः इति मध्यगेहभट्टः कुलदेवतां सस्मार ।

अयं प्रदेशः पाजके ग्रामे वर्तते । पाजकक्षेत्रतः आग्नेयदिग्भागे पर्वतस्य उपरि वासुदेवस्य तथा वृषभस्य पादचिन्हानि वर्तन्ते । इदानीमपि भक्ताः द्रष्टुं शक्नुवन्ति । परन्तु मार्गः सम्यक् नास्ति ।

## बीजच्छलेन पुरुषार्थम्

कदाचित् मध्याह्ने भोजनस्य समयः सन्निहितः आसीत् । वासुदेवः क्रीडावसानकाले बुभुक्षितस्सन् गृहं आजगाम । तत्र मध्यगेहभट्टः भोजनार्थं नागतवान् । माता “भोजनार्थं पितरम् आनायतु” इति वासुदेवं प्रति अवदत् । वासुदेवोऽपि पितुः समीपं गत्वा “तात! भोजनसमयः सन्निहितः। अशनार्थम् आगच्छतु” इति अवदत् ।

**लीलावसानसमये सहसा कदाचित्**

**आर्योऽमुनाऽभ्यवहृतिं प्रतिचोद्यमानः ।**

**रोद्धैष नोऽस्ति धनिको वृषविक्रयीति**

**प्रोवाच नन्दनमुखेन्दुमवेक्ष्य मन्दम्** ॥ [मध्व.2.50]

पुत्रस्य वचनं श्रुत्वा मध्यगेहभट्टः “भो पुत्र! गृहात् बहिः धनिकः कश्चन पुरुषः[ಕಕ್ಕು ಶೆಟ್ಟು] मां प्रतीक्षमाणः अस्ति ।

पूर्वं धनिकपुरुषात् मया वृषभः क्रीतः । किन्तु धनिकाय दातुं मत्समीपे धनं नास्ति । तदस्य सङ्कष्टस्य परिहारं विना मह्यं भोजनं न रोचते । तस्मात् भवान् भोजनं करोतु" इति नन्दनमुखेन्दुं अवेक्ष्य शनैः अवदत् ।

वासुदेवोऽपि पितुः वचनं श्रुत्वा धनिकस्य समीपं जगाम । धनिकेन सह गृहात् बहिः स्थितस्य तिन्त्रिणीवृक्षस्य समीपं आजगाम । वासुदेवः तद्वृक्षस्य कानिचन बीजानि [ಹುಣಸೆಬೀಜ] सुकोमलेन लीलाकरेण करेण सङ्गृह्य धनिकाय स्मित्वा प्रायच्छत् ।

**लीलाकरेण स करेण सुकोमलेन**

**बीजान्तराणि किल कानिचिदाशु तस्मै ।**

**स्मित्वाऽर्भकोऽभिमतनिष्कपदे यदाऽदात्**

**आदत्त तानि धनिको बहुमानपूर्वम् ॥** [मध्व.2.51] ।

धनिकस्तु तानि बहुमानपूर्वं स्वीकृत्य स्वीयं धनं लब्धम् इति सन्तुष्टः सन् गृहं प्रतिजगाम । वासुदेवः बीजच्छलेन विशिष्टं पुरुषार्थं अदात् । तदेवं वासुदेवः पित्रा कृतं ऋणं पर्यहरत् । मध्यगेहभट्टोऽपि कतिपयानां दिनानाम् अनन्तरं ऋणं परिहर्तुं धनिकस्य समीपम् अगमत् । धनिकस्तु "हे विप्रोत्तम! त्वत्पुत्रः मह्यं धनं प्रायच्छत् । तस्मात् भवान् ऋणात् विमुक्तोऽसि" इत्यवदत् । मध्यगेहभट्टः धनिकस्य वचनं श्रुत्वा आदौ सन्तुष्टिं ततः आश्चर्यं च अन्वभूत् ।

**"लब्धं सुतादिति वदन् द्विजपुङ्गवेन**

**कालान्तरे निजधने प्रतिदित्सितेऽपि ।**

**साक्षादमानवनवाकृतितः स लेभे**

**बीजच्छलेन पुरुषार्थमहो विशिष्टम्"** [मध्व–2–52] इति

वासुदेवस्य अस्य आश्चर्यं चरित्रं वर्णितम् । पितुः ऋणमोचनप्रसङ्गस्य साक्षीभूतः तिन्त्रिणीवृक्षः अद्यापि पाजके मठे अस्ति । वासुदेवतीर्थस्य वायव्यदिग्भागे वर्तते । भक्ताः अस्मिन् प्रदेशे ऋणपरिहाराय “ऋणमोचनस्तोत्रं” पठन्ति । श्रीमठस्य मन्त्राक्षतायां प्रसादरूपेण तिन्त्रिणीबीजान्यपि भवन्ति ।

## ननु सखा मम काननगो विभुः

इदानीं त्रयो वर्षीयः वासुदेवः। एकदा निडियूरुनामके ग्रामे मध्यगेहभट्टस्य बन्धूनां गृहं आसीत् । तत्र विवहमहोत्सवः । तस्मात् स्वजनैः सह मध्यगेहभट्टः तद्ग्रामम् अगच्छत् । अयम् ग्रामः मल्पे मार्गे वर्तते । प्राचीनकाले अस्य ग्रामस्य नाम नडुवैरि [ನಡುವೈರಿ] इत्यासीत् । मध्यकाले नड्वेरि [ನಡ್ವೇರಿ] इति । इदादीं निडियूरु [ನಿಡಿಯೂರು] इति नाम । तत्रापि निडियूरु ग्रामे ग्रामद्वयम् 1.बडानिडियूरु.2. तेङ्कनिडियूरु इति । बन्धूनां गृहं बडानिडियूरुग्रामे वर्तते । तत्रत्य गृहं इदानीं मठः अभवत् । स्वजनतापगमागमसङ्गमप्रतिसभाजितपूर्वकसम्भ्रमोपेते तस्मिन् महोत्सवे माता यदा मग्ना आसीत् तदा वासुदेवः तद्ग्रामात् निरगात् ।

**“स्वजनतापगमागमसङ्गम–**

**प्रतिसभाजितपूर्वकसम्भ्रमे ।**

**अविदुषी जननीति स बालकः**

**शरणतो रणतो निरगान्नृभिः”** [मध्व.3.2] निर्जगाम ।

तद्गृहं इदानीं “कल्लमठः” इति वदन्ति ।

## कोडवूरु शङ्करनारायणः

वासुदेवः ग्रामाद् प्रस्थितस्सन् कोडवूरुग्रामे [ಕೊಡವೂರು] काननदेवतासदनं नामकं देवालयं प्रविवेश । **"त्वरितमेत्य स काननदेवतासदनमत्र ननाम रमापतिम्"** [मध्व.3.4] इति । तत्र श्रीशङ्करनारायणस्य सन्निधिः । बहुप्राचीनदेवालयः । काननदेवता इति किरातरूपी शिवस्य नाम ।

वनवासकाले अर्जुनः पाशुपतास्त्रनिमित्तं अत्र आगतवान् आसीत् । शिवं प्रति तपस्तेपे । शिवार्जुनयोः मध्ये युद्धः समजनि । श्रीकृष्णस्य भावनां पुरस्कृत्य शिवः पाशुपतास्त्रं अयच्छत् इत्येवं पौराणिकवर्णनम् । अत्र किरातरूपी शिवः पाण्डवबन्धुः श्रीकृष्णश्च उभावपि सन्निहितौ । अत एव शङ्करनारायणौ अत्र विराजेते ।

पुराणे क्रोडाश्रम इति ख्यातः प्रदेशः । अत्रैव इन्द्राळी नदी प्रवहति । एकदा क्रूरिणौ खर–रट्टासुरौ दानवौ अस्मिन् परिसरे हिंसकौ आस्ताम् ।

शिववरबलेन दृप्ताभ्यां ताभ्यां मुनिगणाः पीडिताः बभूवुः । देवाः अपि मुनिजनानां संरक्षणार्थं भगवन्तम् प्रार्थयामासुः । क्रोडाश्रमे क्रोडनामा मुनिः महान् विरक्तः योगी आसीत् । सः भगवन्तं तपस्तेपे । भगवान् तपसा सन्तुष्टः प्रत्यक्षो बभूव । मुनिः कृताञ्जलिपुटः वरं ययाचे । "भवान् शिवश्च एकस्मिन्नेव शरीरे आगत्य अनुग्रहं कुर्वन्तु" इति । तथाऽस्तु इति भगवान् आबभाषे ।

हरि–हरौ दर्शनं ददतुः । तौ दृष्ट्वा

**"शूलसुदर्शनसुरुचिं बालेन्दूज्वलकिरीटशोभतशिरसम् ।**

**पङ्कजमुखकरचरणं शङ्करनारायणं वन्दे"** इति मुनिः अस्तौत् ।

तौ शङ्करनारायणौ दानवौ संहृत्य मुनिप्रार्थनया तत्रैव सन्निहितौ । एवं पौराणिकी कथा अस्य देवालयस्य ।

उडुपितः मल्पे मार्गे विराजते अयं देवालयः । जीर्णोद्धारप्रक्रियया भव्यं नूतस्वरूपं प्राप्य देदीप्यमानो वर्तते । सहस्राधिकाः यात्रार्थिनः आगच्छन्ति । मकरमासस्य कृष्णपक्षद्वितीयायां वार्षिकमहारथोत्सवः भवति । वासुदेवः तत्र सन्निहितं शङ्करनारायणं भक्त्या प्रणनाम ।

## बन्नञ्जे महालिङ्गेश्वरः

ततः प्रस्थितःसन् आग्नेयदिशि विराजमानं महालिङ्गेश्वरसदनं अगच्छत् । नारिकेल्युपपदान्तरगते सद्मनि (ताळेकुडे) विद्यमानं रमापतिं साष्टाङ्गं प्रणनाम । ताळेकुडे इति नाळिकेर्यन्तरशब्दस्य अपभ्रष्टसञ्ज्ञा । शिवळ्ळिग्रामस्य कस्यचित् प्रदेशस्य सञ्ज्ञा । तौळवप्रदेशे सामान्यतः एवमेव प्रदेशस्य व्यवहारो विद्यते । तस्मिन् काले ताळेकुडे इत्येव व्यवहारः आसीत् । अयं प्रदेशः कोडवूरु – उडुपि मार्गे वर्तते । अत्र शिवः विराजते । अयमपि प्राचीनः देवालयः । प्रायशः क्रि.श अष्टम अथवा नवमशतमानस्य देवालयः । सम्पूर्णशिलामयः देवालयः । इदानीं अभिवृद्धिं प्राप्य वैभवं आतनोत् । शिवरात्रिदिने नवरात्रिसन्दर्भेऽपि विशेषोत्सवः प्रचलति । वासुदेवः ततोऽपि प्रस्थितः सन् रौप्यपीठपुरनिवासिनं पूर्वदिगालयं प्रविवेश । तत्र चन्द्रमौळीश्वरः विराजते । तत्रस्थं भगवन्तं प्रणम्य श्रीअनन्तेश्वरं आजगाम । एवं वासुदेवः एकाकी कानने सञ्चारं अकरोत् । सर्वत्र वासुदेवः भगवन्तं स्तुत्वा सन्ननाम । साष्टाङ्गनमस्कारस्य [15] फलमाह कविः –

**सुहयमेधगणातिशयालवो**

**हरिनमस्कृतयः सुकृता इमाः ।**

**इति सुरैरपि भूसुरमण्डलैः**

**सनमत् स सविस्मयमीक्षितः** [मध्व–3–6] इति ।

महाभारते भीष्मस्तवराजे

**एकोऽपि कृष्णस्य सकृत्प्रणामो दशाश्वमेधावभृतेन तुल्यः ।**

**दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय"** [म.भा.12.47.93]"

इति नमस्कारस्य महिमा वर्णिता ।

मध्यगेहभट्टोऽपि सुतम् अनवलोक्य तं मृगयति स्म । जनसदागतिसूचितवर्त्मना जगाम । तदवसरे पथिकाः "कश्चन बालकः अस्मिन् मार्गे गतवान्" इत्यवदन् ।

**अनवलोक्य सुतं सुतवत्सलो**

**मृगयति स्म महीसुरपुङ्गवः ।**

**मुहुरपृच्छदमुष्य गतिं नरान्**

**पथि पथि प्रगतोऽनुपदं द्रुतम् ॥** [मध्व.3.8]

तदेतेषां पथिकानां वचनानुसारं गच्छन् सोऽपि रौप्यपीठपुरं प्राप्तवान् । तत्र श्रीअनन्तेश्वरस्य सन्निधौ स्वपुत्रं ददर्श । अत्यन्तम् आनन्दमवाप । ततः स्वपुत्रम् "अयि सुत! विवाहगृहात् रौप्यपीठपुरपर्यन्तं एक एव कथम् आगतोऽसि? एतादृश दीर्घतमे पथि तव सहचरः कः आसीत्?" इत्यपृच्छत् ।

**अयि सुतेदमुदाहर तत्त्वतो**

**ननु समागतवानसि साम्प्रतम् ।**

**स्वजनतारहितस्य तु कोऽत्र ते**

**सहचरोऽर्भक दीर्घतमे पथि ॥** [मध्व.3.11] इति पिता अपृच्छत् ।

वासुदेवस्तु "तात! नाहम् एक एव आगतोऽस्मि । काननगः परमात्मा मम सहचरः अस्ति । [16] तस्मात् कुतो भीतिः ?" इत्येवं समादधे ।

**तदितरायतनात्तु यदागमं**

**कृतनतिः खलु तत्र हरिः सखा ।**

**अहमिहापि महेन्द्रदिगालयं**

**प्रणतवानुत यावदधीश्वरम् ॥**

**अपि ततोऽहमुपेत्य सहामुना**

**भगवतेऽत्र सते प्रणतिं व्यधाम् ।**

**इति निगद्य विभाति शिशुः स्म**

**विस्मितसभाजनचीर्णसभाजनः** ॥ [मध्व.3.13–14] इति स्वगमनविवरं अदात् ।

## पाजके अक्षराभ्यासः

मध्यगेहभट्टः सुमुहूर्ते स्वपुत्रेण अक्षराणि लेखयित्वा अक्षराभ्यासविधिं निरवहत् । अक्षराभ्यासात् पूर्वं देवपूजादिकं विधाय बन्धूनां सम्मुखे बृहच्छिलायां अक्षराणि लेखयामास । वासुदेवो हि मुख्यप्राणस्य अवतारः । मुख्यप्राणश्च भाविब्रह्मा इति कथ्यते । तदेवं यः अग्रे अक्षराभिमानिन्याः सरस्वत्याः पतिः भविष्यति तस्य इदानीम् अक्षराभ्यासविधिः तत्पित्रा क्रियते इति देवताः विनोदं चक्रुः ।

**"सकलशब्दमयी च सरस्वती**

**सततमानमति स्वयमेव यम् ।**

**द्विजवरोऽथ कदाचनमातृकाः**

**किल सुतं परिचाययति स्म तम्"** [मध्व –3–18] इति ।

अक्षराभ्यासात् परस्मिन् दिने मध्यगेहभट्टः पूर्वं लिखितानि अक्षराणि पुनः स्वपुत्रेण लेखयामास । तदा वासुदेवः “अयि पूज्य! एतानि अक्षराणि ह्यः मया लिखितानि खलु । पुनः तेषां लेखनं मास्तु” [मध्व.3.19] इत्युक्तवान् ।

**लिपिकुलं ननु तात गते दिने**

**लिखितमेव पुनर्लिखितं पुनः ।**

**इति निजप्रतिभागुणभावितम्**

**हरिपदस्य वचस्तमनन्दयत् ॥** [मध्व.3.19]

अपि च ह्यस्तने दिने लिखितानि अक्षराणि पुनः लिखित्वा पित्रे दर्शयामास । तदेतत् दृष्ट्वा मध्यगेहभट्टः परमानन्दतुन्दिलः अभवत् । “वासुदेवः अप्रतिमप्रतिभाशाली अस्ति । तस्मिन् जनमनोनयनवचनग्रहपीडा माभूत्” इति धिया एकान्ते तस्य विद्याभ्यासम् अकरोत् ।

वासुदेवस्य अक्षराभ्यासशिला बृहच्छिला । इदानीमपि पाजके मठे वर्तते । श्रीतुळसीसन्निधाने अस्ति । तच्छिलां संरक्षितवन्तः । बहवः अस्यां शिलायां अक्षराभ्यासं प्रकुर्वन्ति । अतः अक्षराभ्यासाय अयं विशेषप्रदेशः अभवत् । अत एव “पाजकम्” नाम । तथा हि– पातीति पः भगवान् । तेन जातः वायुः पाजः । तस्मात् कं ज्ञानसुखम् प्राप्यते इति पाजकम् ।

## नयम्पळ्ळिग्रामे विद्वत्प्रतिभा

शिवळ्ळिग्रामे घृतवल्लीनामकः कश्चन प्रदेशविशेषः वर्तते । घृतवल्ली इत्यस्यशिकभाषायां नयम्पळ्ळी [ನೇಯಂಬಳ್ಳಿ] इत्यर्थः । मध्यगेहभट्टस्य बान्धवाः आसन् । कदाचित् तत्र वार्षिकोत्सवः आसीत् । तदर्थं वासुदेवः मात्रा सह तद्ग्रामम् अगच्छत् । तत्र सायङ्काले धौतपटोद्भवः [ಮಡಿನಾಯಿ] शिवभट्टनामकः कश्चन विद्वान् प्रवचनं करोति स्म ।

**परिषदा नितरा परिवारितः**

**शिवपदः किल धौतपटोद्भवः ।**

**इह कथां कथयन् ददृशे ततः**

**पृथुधिया पृथुकाकृतिनाऽमुना ॥** [मध्व.3.22]

तत्र शिवभट्टः पुराणानाम् व्याख्यानं यथाशास्त्रं न चकार । विचारविचक्षणः वासुदेवः तदीयं प्रवचनं श्रुत्वा शनकैः "भो महाशय! भवता प्रतिपादितः विषयः भगवतः वेदव्यासस्य अभिप्रायात् विरुद्धः अस्ति । तस्मात् न एतत् समीचीनम्" इत्यवदत् ।

**"अपरथा कथितं कथक त्वया**

**ननु मतान्महतामिति सस्मितम्** [मध्व–3–23] इति ।

तदवसरे तत्रस्थाः जनाः "यद्ययम् अर्थः न समीचीनः, तर्हि समीचीनम् अर्थं प्रतिपादयतु" इति वासुदेवं प्रार्थयामासुः । वासुदेवः सप्रमाणं तद्वचनस्य आशयं निरूपयामास ।

**"अगणयन्न शिवं जनता तदा**

**स्ववचने वसुदेवसुताह्वये ।**

**मुखरमिच्छति को मृगधूर्तकं**

**प्रकृतहुंकृतसिंहशिशौ सति"** [मध्व–3–24] इति

वासुदेवस्य महिमां अवर्णयत् । अपि च गृहं प्रति गमनानतरं स्वपित्रे प्रवृत्तं वृत्तान्तं निवेदयामास । "तदत्र कथके दोषः अस्ति, उत मयि" इति पितरं पप्रच्छ । मध्यगेहभट्टस्तु "वासुदेवस्य उत्तरं समीचीनम्" इति समादधे ।

**"प्रकृतितः कृतिता खलु मे शिशोः**

**मदधिनाथदयोदयजेत्यसौ"** [मध्व–3–27]

इति मनसि भगवन्तम् अस्तौत् ।

अयं प्रदेशः सम्प्रति उडुपि–कुन्दापुरमार्गे कल्याणपुरस्य समीपे वर्तते । तत्र सुविशालः शिवदेवालयः भक्तजनान् आकर्षति । सुवर्णानद्याः तीरे विलसति । मडिन्नायकुलात् "मडिमल्लिकार्जुनदेवालयः" इत्येव फलकं विराजते इदानीमपि । अस्मिन् देवालये सेवार्थं बहवः आगच्छन्ति । मुम्बयिमहानगरे स्थिताः भक्ताः जीर्णोद्धारं कारयामासुः । शिवरात्रिदिने विशेषः धार्मिककार्यक्रमः भवति ।

## पाजके लिकुचशब्दार्थकथनम्

कदाचित् पाजके मध्यगेहभट्टः पुराणप्रवचनं कुर्वन् आसीत् । तद्दिने वृक्षविशेषबोधकानां पदानां विवरणं क्रियमाणं आसीत् । किन्तु लिकुचपदस्य अर्थः न विवृतः । तदानीं वासुदेवः "भो तात भवता लिकुचपदस्य अर्थः न उक्तः" इत्यवदत् । किन्तु स्वतः मध्यगेहभट्टः एव तदर्थं न जानाति स्म । तदेतत् विदित्वा वासुदेवः स्वयमेव लिकुचपदस्य अर्थविवरणं कृतवान्

**विविधशाखिपदार्थनिवेदने**

**लिकुचनाम्नि तदाऽनुदितार्थके ।**

**किमिति तात तदर्थमवर्णयन्**

**कथयसीति शनैरयमब्रवीत्"** [मध्व–3–29] इति

वासुदेवः पितरमुवाच । तदा "वासुदेवः मम कुलाधिपतेः अनुग्रहात् जातः, तस्मात् एतादृशः प्रतिभाविशेषः अस्तीति" मध्यगेहभट्टः भगवन्तं अस्तौत् । वस्तुतः लिकुचपदस्य हेब्बेलसु [ಹೆಬ್ಬೆಲಸು]इति प्रादेशिकभाषायां अर्थः ।

परन्तु वासुदेवस्य मतिः केवलं पदार्थनिवेदने नासीत् । अपि तु स्वलीलां यः वर्णयति तस्य लिकुचान्वयस्य अर्थनिवेदनं मुख्यं आसीत् ।

## कापुग्रामे गुरुकुलः

मध्यगेहभट्टः गर्भाष्टमे वर्षे वासुदेवस्य उपनयनम् अकरोत् । ततश्च वेदादीनां सच्छास्त्राणाम् अध्ययनार्थं गुरुकुलं प्रेषयामास । तस्मिन् काले तत्र पूगवनान्वये उत्पन्नः विप्रः आसीत् । सः महामहोपाध्यायः । तस्य तोटंतिल्लाय [ತೋಟಂತಿಲ್ಲಾಯ] इति प्रादेशिकभाषायां वदन्ति स्म । पाङ्गळ इति प्रदेशस्य पाङ्गळनद्याः पार्श्वे अस्ति । पाङ्गळ इत्यस्य [ಪಾಂಗಳ– ಪಾವು ಕಳೆ] कृषिप्रधानप्रदेशः अर्थः । अन्यद् पार्श्वे श्रीजनार्दनदेवालयः वर्तते । अयं देवालयः मध्वसम्पर्कभूतः । वासुदेवः गृहात् गुरुकुलगमनसमये देवं नत्वा गच्छति स्म । इदानीं तत्र देवालयः नास्ति । स्थळान्तरं बभूव । तत्र स्मारकरूपेण केवलं वेदिका दृश्यते । तस्य नाम “मध्वकट्टे” इति निर्दिशन्ति । श्रीजनार्दनदेवालयस्य जीर्णोद्धारसमये प्रवृत्ते अष्टमङ्गप्रश्ने इयं कथा सूचिता । तदनुगुणं इदानीं वार्षिकोत्सवे तन्त्रिणः उत्सवविग्रहं आनीय पूजयन्ति । गुरुकुलं सुप्रसिद्धम् आसीत् । तदिमं गुरुकुलं तत्पिता प्रेषयामास ।

वासुदेवः विद्याभ्यासापेक्षया क्रीडायाम् अतीव आसक्तिं प्रदर्शयामास । अपि च विना कारणं गृहं गच्छति स्म । पाठनसमये अन्यमनस्कः आसीत् । तदीदृशं वासुदेवं दृष्ट्वा गुरवः क्रुद्धाः अभवन् । “भो वासुदेव! भवान् विद्याभ्यासे अनासक्तोऽसि । क्रीडास्वेव अतीव आसक्तिं प्रदर्शयिष्यसि । सहपाठिन इव भवानपि श्रद्धया विद्याभ्यासं करोतु’ इति साग्रहम् अवदत् ।

वासुदेवोऽपि "अयि! पूज्य! भवता प्रतिचरणं मुहुर्मुहुः यत् पाठ्यते तादृशं पाठनं मम न रोचते । तस्मात् अध्ययने उदासीनोऽस्मि" इति प्रत्यवदत् । तच्छ्रुत्वा कुपिततराः गुरवः "भो विशारद! यदि मम पाठनक्रमः अयुक्त इति मन्यसे तर्हि अद्यतनपाठस्य अग्रिमं भागं कथयतु" इति पुनरवदत् । वासुदेवस्तु गुरोराज्ञाम् अनुसरन् अपाठितमपि अग्रिमभागं सुस्पष्टं श्रावयामास । तदेतत् दृष्ट्वा न केवलं गुरवः सुमनस अपि आश्चर्यचकिताः आसन् [17] । अस्मिन्नेव गुरुकुले क्रीडावसाने कन्दुकस्तुतिं व्यरचयत् । तथा हि

**"अम्बरगङ्गाचुम्बितपादः पदतलविदलितगुरुतरशकटः ।**
**कालियनागक्ष्वेळनिहन्ता सरसिजनवदलविकसितनयनः ॥**
**कालघनालीकर्बुरकायः शरशतशकलितरिपुशतनिवहः ।**
**सन्ततमस्मान् पातु मुरारिः सततगसमजवखगपतिनिरतः"** ॥ इति ॥

कदाचित् वासुदेवः सहपाठिभिः सह समित्कुशसङ्ग्रहार्थं अरण्यं गतवान् । तेषु सहपाठिषु गुरुपुत्रोऽपि अन्यतमः । यदा समित्कुशान् सङ्गृह्य प्रतिनिवृत्ताः तदा गुरुपुत्रः असहनीयया शिरोवेदनया जर्झरितः सन् भूमौ पपात । बाल्यादारभ्य शिरोवेदनया सः पीडितः आसीत् । वासुदेवः तस्य श्रोत्रे वायुं प्रसार्य गुर्वीं दुस्सहां तद्वेदनां अशमयत् । [18]

**प्रियवयस्य शिरोगुरुवेदनाम्**
**अशमयत् सहजामपि दुस्सहाम् ।**
**स विपिने विजने मुखवायुना**
**श्रवणगोचरितेन कदाचन** ॥ [मध्व.3.53]

एकदा वासुदेवः गुरूणां समीपं गत्वा "ऐतरेयोपनिषत्सु किञ्चित्सन्देहः अस्ति । अहं तदर्थस्य अनुवादं करोमि ।

यदि तत्र दोषाः सन्ति तान् परिहरतु" इत्येवं प्रार्थयामास । ततः सयुक्तिकं ऐतरेयोपनिषदः अर्थं निरूपयामास । तदनेन अनुवादेन गुरूणामपि तद्विषये ये सन्देहाः आसन् ते सर्वे परिहृताः आसन् [14]। तदेवमनुवादं कृत्वा वासुदेवः स्वगृहं गन्तुम् अनुज्ञां याचे । तदा गुरवः एतावत्पर्यन्तं कृतानुवादेनैव गुरुदक्षिणा वासुदेवेन समर्पिता इति विन्दिरे । "दक्षिणा ज्ञानसन्देशः" इति वचनानुसारं अनेन प्रियशिष्येण गुरुदक्षिणार्थम् अनुवादः कृतः, न तु संशयपरिहाराय । यतो हि अनूदिते विषये तस्य सन्देशलेशोऽपि नास्ति इति गुरवः अमन्यन्त ।

**साक्षादथोपनिषदो विभुरैतरेयाः**

**पाठच्छलेन विजनेऽर्थरसं ब्रुवाणः ।**

**अध्यापकाय विततार विमोक्षबीजं**

**गोविन्दभक्तिमुचितां गुरुदक्षिणां सः"** [मध्व–3–55] इति

श्रीमन्महैतरेयोपनिषदर्थकथनेन योग्यतानुसारं गोविन्दभक्तिं ददौ । सन्यासाश्रमानन्तरं गुरुकुलं आगत्य गुरवे कुञ्चीकृष्णप्रतिमां च अदात् । इयं प्रतिमा इदानीं उद्यावरस्य अण्णय्याचार्यमठे अस्ति ।

गुरुकुलेऽस्मिन् एकः मठः वर्तते । दण्डतीर्थमठः इत्येव नाम । इदानीं अयं मठः श्रीकृष्णापुरमठस्य अधीने वर्तते ।

एकदा अस्मिन्नेव गुरुकुले जलक्षामः आसीत् । कृषिसंरक्षणार्थम् वासुदेवं कृषिकाः प्रार्थयामासुः । करुणाळुः सः स्वहस्तेन पालाशदण्डेन भूखननं चकार । तत्र तदा जलोत्पत्तिः समजनि । तदारभ्य "दण्डतीर्थम्" इति नाम्ना ख्यातः सरोवरः अभवत् । श्रीकृष्णपूजार्थं सङ्कल्पिताः श्रीपादाः पर्यायदिने अरुणोदये अत्र स्नान्ति । ततः श्रीपादाः विशेषसन्निधानं प्राप्य पुरप्रवेशं कुर्वन्ति । तत्प्रदेशोऽपि दण्डतीर्थप्रदेशः बभूव ।

इदानीं दण्डतीर्थं भव्यस्वरूपं अवाप ।

तदेवं वासुदेवः गुरुकुलवासं कृत्वा अध्ययनकार्यं समापितवान् । यद्यपि जगद्गुरोः मुख्यप्राणस्य गुरुकुले वासस्य अध्ययनस्य च आवश्यकता नास्ति तथापि सज्जनानां शिक्षार्थं तादृशं कार्यं वासुदेवेन अकारि ।

## तुरीयाश्रमस्वीकारः – कार्यूरुमठः

तस्मिन् काले तत्त्वज्ञानं लुप्तमासीत् । सर्वत्रापि पाखण्डजनाः स्वेप्सितस्य सिद्धान्तस्य प्रसारणं कुर्वन्ति स्म । सज्जनानां तत्त्वज्ञानप्राप्तीच्छायाः सत्वेऽपि तदुपायम् अजानन्तः दुःखिताः आसन् । सच्छास्त्राणां सद्भावेऽपि इतरेषां अपव्याख्यानैः तानि निलीनानि आसन् । तदेतत् दृष्ट्वा वासुदेवः पाखण्डिनः दुष्टजनान् शिक्षितुं मनः आदधे । किन्तु आयुधमुखेन दण्डयितुं हरिस्वसा अस्ति । तस्मात् मया दण्डमुखेन दण्डनं दीयते इति विचिन्त्य तदर्थं तुरीयाश्रमः स्वीकर्तव्यःइति निश्चितवान् ।

**मम प्रभोर्नापरथा हि शोभते**
**द्विषत्सु विष्णुं यददण्डधारणम् ।**
**हरिस्वसा नन्वचिरादसद्भिदे**
**भवेदतो नास्मि च दण्डधारकः ॥** [मध्व.4.3]

इति तुरीयाश्रमार्थं सङ्कल्पयामास । तुरीयाश्रमं स्वीकृत्य आश्रमसंरक्षणम्–सच्छास्त्राणां आविष्कारश्च मया करणीयः । सर्वत्र आश्रमधर्मोऽपि युगबलेन नष्टप्रायः [20] । अतः तुरीयाश्रमं स्वीकरिष्यामि इति मतिं चक्रे । किन्तु सन्न्यासाश्रमः गुरुमुखेन स्वीकर्तव्यः । तस्मात् योग्यगुरोः अन्वेषणे वासुदेवः प्रवृत्तिं चकार ।

तदा रौप्यपीठपुरे हंसनामकपरमात्मना प्रवृत्तस्य संस्थानस्य अधिपतिः अच्युतप्रज्ञनामकः कश्चन यतिः आसीत् [21] ।

**यतिर्यतात्मा भुवि कश्चनाभवत्**

**विभूषणो भूरिविरक्तिभूषणः ।**

**न नाममात्रात् शुचिमर्थतोऽपि यम्**

**जनोऽच्युतप्रेक्षमुदाहरत् स्फुटम्** ॥ [मध्व.4.6] इति ।

भक्तिवैराग्यसम्पन्नः सदा अच्युतस्य ध्याने आसक्तः [22] आसीत् । तदेवम् "अच्युतप्रेक्ष" इति नाम अपि सार्थकम् आसीत् । "अच्युतप्रज्ञ" इत्यपि नामान्तरम् । तदयम् अच्युतप्रेक्षः पूर्वं पाण्डवसमीपस्थेषु यतिषु अन्यतमः यतिः आसीत् [मध्व.4.7]। यदा पाण्डवाः हस्तिनपुरे न्यवसन् तदा तत्र बहवः यतयः आसन् । प्रतिदिनं युधिष्ठिरः तेभ्यः भिक्षारूपेण अन्नदानं करोति स्म । भीमेन भगवते समर्पितं प्रसादादिकं द्रौपदी यतिभ्यः समर्पयति स्म । तदेवं पूर्वजन्मार्जितेन पुण्येन अच्युतप्रेक्षः [23] अत्यन्तं गौरवार्हः आसीत् । किन्तु कलिकालवशात् तस्मिन् समीचीनस्य आचारस्य सद्भावेऽपि ज्ञानविषये सन्देहः आसीत् । अच्युतप्रेक्षस्य गुरवोऽपि देहान्तसमये "हे सुव्रत! एतावत्पर्यन्तं येन प्रकारेण अस्माभिः भगवान् आराधितः तत्प्रकारे अस्माकं दार्ढ्यं नास्ति । गत्यन्तरविरहात् अस्माभिः तत्प्रकारः अनुसृतः । किन्तु भवान् मा विश्वसीत्" इत्युपदिश्य दिवंगताः आसन् । तस्मात् सम्यज्ज्ञानप्राप्त्युपायम् अच्युतप्रेक्षः अन्विषति स्म । तस्मात् रौप्यपीठपुरे श्रीमदनन्तेश्वरस्य आराधनं कुर्वन् आसीत्तेन आराधनेन सन्तुष्टः भगवानपि कश्चन पुरुषं प्रविष्टस्सन् आबभाषे ।

**सुभक्तिना तेन स भक्तवत्सलो**

**निषेवितस्तत्र परं बुभुत्सुना ।**

**भविष्यतः शिष्यवराद्धि विद्धि माम्**

**इति प्रविष्टः पुरुषं तमभ्यधात्** ॥ [मध्व.4.13] इति ।

पाजके वासुदेवः सन्न्यासाश्रमस्वाकारार्थं मतिं चक्रे । वासगृहं नत्वा गुरुं अन्विषन् श्रीअनन्तेश्वरदेवायं आजगाम । श्रीअच्युतप्रज्ञं यतिं ननाम । वासुदेवस्य सङ्कल्पवार्तां मध्यगेहभट्टाय प्रेषयत् । श्रुत्वा तद्वार्तां वियोगतान्तौ पितरौ वासुदेवं समीयतुः । तुरीयाश्रमस्वीकारार्थं कृतधीः वासुदेवः तदा स्वनिर्धारं समर्थयन् आह ।

**यदा विरक्तः पुरुषः प्रजायते**

**तदैव सन्न्यासविधिः श्रुतौ श्रुतः ।**

**न सङ्गहीनोऽपि परिव्रजामि वाम्**

**अहं तु शुश्रूषुमकल्पयन्निति** ॥ [मध्व.4.23] इति ।

पुरुषः यदा विरक्तः प्रजायते तदैव सन्न्यासविधिः इति निर्णीय स्वनिर्णयं पितृभ्यः न्यवेददयत् । वासुदेवस्य निर्णयं श्रुत्वा मातापितरौ अतीवदुःखितौ आस्ताम् । मध्यगेहभट्टोऽपि "अयि सुत! पुम्नाम्नः नरकात् यः त्रायते स एव पुत्र इत्युच्यते । यदि त्वदीयं कर्तव्यं परित्यज्य सान्न्यासाश्रमं स्वीकरोषि तर्हि वयम् प्राणत्यागं कुर्मः" इति तर्जयामास । तच्छ्रुत्वा वासुदेवः सपद्येव कौपीनधारी भूत्वा –

**क्षणेन कौपीनधरो निजं पटम्**

**विधार्य हे तात कुरुष्व साहसम् ।**

**इतीममुक्त्वा प्रभुरब्रवीत् पुनः**

**शुभान्तरायं न भवांश्चरेदिति** ॥ [मध्व–4–21]

हे तात! भवदुक्तप्रकारेण् साहसं कुरुष्व! इति सस्मितं प्रत्यवदत् । तच्छ्रुत्वा मध्यगेहभट्टः अयि सुत! यदि भवान् तुरीयाश्रमं स्वीकरोषि तर्हि वयं अनाथाः भवेम इति सोत्कण्ठम् अवदत् । तदेतच्छ्रुत्वा वासुदेवः "हे तात! यूयं अनाथाः न भवथ! भगवतः अनुग्रहेण भवतः पुत्रप्राप्तिः भविष्यति । ततः अहं तुरीयाश्रमं स्वीकरिष्यामि. शुभान्तरायं न भवांश्चरेत्" इत्यवदत् । ततः पुत्रप्राप्तौ सत्यां वासुदेवः अच्युतप्रज्ञयतेः तुरीयाश्रमं स्वीकृतवान् । तत आरभ्य वासुदेवः "श्रीपूर्णप्रज्ञतीर्थः" इति नाम्ना प्रसिद्धः अभवत् ।[मध्व.4.33]

अयं कार्यक्रमः कोव्याडि–कार्नूरुमठे समभूत् ।

**स चिन्तयन् पुत्रमनोरथं शुचा**

**पुनश्च तीर्त्वोपगतो महानदीम् ।**

**यतीश्वरानुव्रतमात्मनन्दनम्**

**तमैक्षत ग्रामवरे मठान्तरे ॥** [मध्व.4.19] । इति प्रामाणाधारेण वासुदेवः कार्नूरुमठे आसीत् । तत्रैव सन्न्यासधिः भवत् इति ज्ञायते । रजपीठपुरे पित्रा सम्भाषणं कृत्वा वासुदेवः गुरुणा सह कार्नूरुमठं आजगाम । उडुपितः कासरगोडुमार्गे महानदीं नेत्रावतीं तीर्त्वा गन्तवम् ।

अयं फलितार्थः । अयं मठः पुत्तूरु–कासरगोडु मार्गे ईश्वरमङ्गलस्य समीपे केरळप्रदेशे विद्यते । कार्नूरुमठः श्रीअच्युतप्रज्ञतीर्थस्य मठः । कल्लूराय इत्यस्य कल्लुरुग्रामजः अर्थः । तत्रैव वर्षद्वयं उवास । पित्रा सह आश्रमस्वीकारचर्चाऽपि अत्रैव समजनि । अन्ते सन्न्यासाश्रमस्वीकारः अभवत् । अत एव

**स रूप्यपीठालयवासिने यदा**

**ननाम नाथाय महामतिर्मुदा ।**

**तदाऽमुनाऽग्राहि नरप्रवेशिना**

**भुजे भुजेनाशु भुजङ्गशायिना ॥**

**चिरात्सुततत्त्वं प्रबुभुत्सना त्वया**
**निषेवणं मे यदकारि तत्फलम् ।**
**इमं ददामीत्यभिदाय सोऽमुना**
**तदा प्रणीय प्रददेऽच्युतात्मने ॥** [मध्व,4.37–38]

इति काव्योक्तरीत्या आश्रमानन्तरं कानिचन दिनानि कार्नूरुमठे वासं कृत्वा ततः गुरुणा साकं रजतपीठपुरमाजगाम । अत एव गुरुणा साकं देवसन्निध्वौ नमनमुक्तम् ।

पूर्वं अत्रैव वेदान्दसभा प्रचलति स्म इति तस्य मठस्य मुख्यस्थः श्रीकल्लूराय महाभागः वदति । समान्यतः सर्वेऽपि सन्न्यासाश्रमकार्यक्रमः श्रीअनन्तेश्वरे अभवत् इत्येव वदन्ति । परन्तु अत्रत्य प्रमुखानां मध्वविजयस्य श्लोकाधारेण कार्नूरुमठे सन्न्याविधिः अभवत् इति निर्णीयते । कल्लूरायवंशजाः एव अस्य मठस्य मुख्यस्थाः । एते विश्वामित्रगोत्रिणः सामवेदिनश्च । श्रीअच्युतप्रज्ञा अपि तद्वंशीयाः । अडूरु देवालयस्य कल्लूरायकुटुम्बस्य च अविनाभावसम्बन्धः । अडूरुदेवालये एते वाक्प्रतिनिधयः । कार्नूरुमठतः अनतिदूरे वर्तते अडूरुक्षेत्रम् । अयं मठः अतीव निर्जनप्रदेशः । अत्र श्रीपूर्णप्रज्ञाचार्यः श्रीकृष्णस्य प्रतिमां ददौ । इदानीमपि मठे श्रीकृष्णमूर्तिः श्रीअच्युतप्रज्ञपूजितः उमामहेश्वरप्रतिमा च वर्तते । मठस्यास्य सम्पर्कः इदानीमपि भक्तानां कृते नास्त्येव ।

## प्रमाणानि

[1] अथैतच्च विशेषेण क्षेत्राणां क्षेत्रमुत्तमम् ।
अतिप्रियं भार्गवस्य नाम्ना पाजकमद्भुतम् ॥ [स्क.पु.]

[2] अतो विमानयोगित्वात् विमानगिरिमद्भुतम् ।
आरोहन्तो जनाः विष्णोः आरोहन्ति पदं धृवम् [स्क.पु.]

[3] द्वारावतीं सकलभाग्यवतीमुपेक्ष्य गोपालबाललनाकरपूजनञ्च ।
वार्धिं वधूगृमतीत्य स मध्वनाथो यत्रास्ति तद् रजतपीठपुरम् गरीयः" [ती.प्र.1–9]

[4] परश्वादीनि आयुधानि यथा पापहराणि वै ।
तीर्थानि च तथेत्येवं बोधयन्त्यभिधा इमाः ॥ [सं.प.4]

[5] सुब्रह्मण्यस्य महिमा वर्णितुं केन शक्यते ।
यत्रोच्छिष्टमपि स्पष्टं श्वित्रिणः शोधयत्यहो ॥ [ती.प्र. 1.37]

[6] ದೇವರನ್ನು ಒಪ್ಪಿಸಿದ ವಿಚಾರದ ಪ್ರಕಾರ ಸಿದ್ಧಾರ್ಥ ಸಂವತ್ಸರ [ಕ್ರಿ.ಶ.೧೨೫೯]. ಈ ವಿಷಯವನ್ನು ದಾಖಲಿಸುವ ತಾಡಪತ್ರವೊಂದು ಶ್ರೀಸುಬ್ರಹ್ಮಣ್ಯಮಠದಲ್ಲಿದೆ ।

[7] यत्र संपुटमस्फोटं कृष्णस्य स्फोरयत्यहो ।
अग्राह्यत्वमदृश्यत्वं किं पुनस्तत्र पण्डिताः ॥ [ती.प्र.1.43]

[8] स्वानुजं विष्णुतीर्थं च तपसा धूतकल्मषम् ।
प्रेषयिष्यति सत्तत्वकथनाय कलौ किल ॥ [स.भा.वि.2.76]

[9] महाय – सङ्क्रमणोत्सवाय [म.वि..भा.प्र.2.6]

[10] ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः [षड्गुणाः]

[11] "गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा । अथ विष्णुबलिश्चैव जातकर्म ततः परम् । उपनिष्क्रमणं नामकरणं च ततः परम् । अन्नप्राशनचौले च तथोपनयनं महत् । महाव्रतानि चत्वारि विवाहो विहृतिर्वसोः । षोडशैताः क्रियाः" [योगदीपिका] ।

[12] ಕೆರೆಯ ನೀರನು ಕೆರೆಗೆ ವರವ ಪಡೆದವರಂತೆ ಕಾಣಿರೊ ಹರಿಯ ಕರುಣದೊಳಾದ ಭಾಗ್ಯವ ಹರಿಸಮರ್ಪಣೆ ಮಾಡಿ ಬದುಕಿರೊ [ಶ್ರೀಪುರಂದರ ದಾಸರ ಕೃತಿ]

[]3 दीपसंयोजनात् ज्ञानम् [रा.वें.स्तो.]

[14] एकाकी योजनाभ्यां व्यवहितमगमत्
यस्त्रिवर्षोऽमरौकः । [प्र.न.5]

[15] उरसा शिरसा दृष्ट्या मनसा वचसा तथा ।
पद्भ्यां कराभ्यां जानुभ्यां प्रणामः अष्टाङ्ग ईरितः [...

[16] यस्तु सर्वाणि भूतानि आत्मैवाभूत् विजानतः । नात्मानं गोप्तुमिच्छति । [का.उ.3]

[17] ईश्वरादन्यत्र आलोचने सर्वविषयं ऋजुयोगिज्ञानम् [प्र.प]

[18] तस्य अनन्तातीतानि जन्मानि प्रकाशितवान् श्रीमध्वः [भा.प्र. 3.53]

[19] येनास्ता मूढशङ्का श्रुतिशुचिवचसाऽलं गुरोः शीर्षशूला
सख्युर्नारायणज्ञोऽथ य उपनिषदं व्याख्यतास्मै सुरार्थ्यः [प्र.न.6]

[20] येनैकान्तयतात्मनामृजवरेणाचार आचार्यवान्

सन्न्यासेन निजा स्वयं प्रकटिता निःसङ्गता संसृतौ ।

श्लाघ्यःपारमहंस्य आश्रमवरो यच्छीलगङ्गाजलस्नातो

व्यक्तमयोग्यसङ्गमभवो दोषात् पुनर्मोक्षितः [तत्वप्रदीपा]

[21] वंशस्यादीन् सनकादीनुपासे दुर्वाससं परतीर्थाख्यभिक्षुम् ।

सत्यप्राज्ञं प्राज्ञतीर्थं च पश्चात् पश्चात् शिष्यान् अच्युतप्रज्ञमध्वौ ॥

वन्दे हृषीकेशमथो नृसिंहं  जनार्दनं चिन्तय धीरुपेन्द्रम् ।

श्रीवामनं संस्मर विष्णुमेमि श्रीराममञ्चेऽहमधोक्षजञ्च ॥

[गुरुपरम्परास्तोत्रम्].

[22] तच्छिष्यो निपुणः शान्तो वेदवेदान्तकोविदः ।

श्रुतीर्व्याख्याति शिष्येभ्यः पञ्चषेभ्यस्तपोमयः ॥ [मणि.मं.7.22]

[23] "सन्न्यासो बद्धबुद्धिः कृतहरिनमनः पार्थपूज्यम् यतिं प्राक्"

[प्र.न.7]

-------------------------------

# तृतीयोऽध्यायः

मध्वसरोवरः – विष्णुमङ्गळग्रामः – अडूरु क्षेत्रम् – परस्विनीतटम् – वर्काडिक्षेत्रम् – कण्वतीर्थक्षेत्रम् – पारन्तीक्षेत्रम् – कोक्कडक्षेत्रम् –यज्ञनारायणमठः – उजिरेक्षेत्रम् – कावुगोळिक्षेत्रम् – कावुमठः – सरिदन्तरे एर्किमठः – कान्तावरक्षेत्रम् – नरसिंहगेहम् – कोडिपाडि –चिक्कमगळूरु – मधूरुदेवालयः – उत्तरे भारते मध्ववैभवः – गङ्गावतरणम् हृषीकेशक्षेत्रम् – बदरीक्षेत्रम् – कुरुक्षेत्रम् – गोमतीनदी – हस्तिनपुरी काशीक्षेत्रम् – गोदावरी – गोवा – तिरुवनन्तपुरम् – कन्याकुमारी – श्रीरङ्गक्षेत्रम् – रामेश्वरे श्रीरामदूतः ।

# तृतीयोऽध्यायः

**मध्वसरोवरः**

अच्युतप्रेक्षेभ्यः स्वीकृततुरीयाश्रमः श्रीपूर्णप्रज्ञाचार्यः तदाश्रमसम्बन्धीनि कर्माणि सम्यक् आचरति स्म । स्वीयम् उपदेशं विनापि तुरीयाश्रमधर्माचरणे निरतं शिष्यं वीक्ष्य अच्युतप्रेक्षाः नितराम् अतुष्यन् [मध्व.4.36] । अथ श्रीपूर्णप्रज्ञाचार्यः कदाचित् "अयि मान्याः! परमपावनीभूतगङ्गास्नानार्थं काशीं जिगमिषुः अस्मि । तदत्र अनुज्ञां याचे" इति लोकव्यवहारम् अनुसरन्तः प्रार्थयामास । तदेतच्छ्रुत्वा अच्युतप्रेक्षाः डोलायमानमनाः अभवन् । "यदि काशीगमनार्थं अनुमतिं दास्यामि तर्हि अहं शिष्यविरहेण सन्तप्तः भवेयम् । यदि अनुमतिं न दास्यामि तदा शुभकर्मणाम् अन्तरायप्रदः भवेयम् । तदत्र श्रीमदनन्तेश्वर एव शरणमिति" तं देवं शरणं जग्मुः । भगवानपि पुरुषाविष्टः सन् "भो सद्गुरो! गङ्गास्नानर्थं काशीगमनस्य आवश्यकता नास्ति! एतद्दिनात् तृतीये दिने अनन्तसरोवरे साक्षात् गङ्गा प्रवहति! तत्रैव भवन्तः स्नानं कर्तुम् अर्हन्ति ।" इत्येवं उच्चैः अवोचत् ।

**इतस्तृतीये दिवसे द्युनिम्नगा**

**त्वदर्थमास्माकतटाकमाव्रजेत् ।**

**अतो न यायाः इति तं तदाऽवदत्**

**प्रविश्य कञ्चित्करुणाकरो हरिः ॥** [मध्व–4–41] इत्यवोचत् ।

तदेतत् श्रुत्वा श्रीपूर्णप्रज्ञाचार्यः नितरां ननन्द । अच्युतप्रेक्षाः अपि "काशीगमनं विनापि शिष्यापेक्षा फलिता" इति नितराम् आनन्दयामासुः । तदयं विषयः जनानां श्रवणगोचरो अभवत् । तद्दिने प्रातःकालात् आरभ्य सर्वे जनाः कुतूहलिनः सन्तः अनन्तसरोवरस्य समीपम् आजग्मुः ।

**तदाज्ञयोपागतजाह्नवीजले**

**जनोऽत्र सस्नौ सह पूर्णबुद्धिना** । सर्वेऽपि स्नाताः बभूवुः ।

**ततः परं द्वादशवत्सरान्तिके**

**सदाऽव्रजेत् सा तदनुग्रहाङ्किनी"** [मध्व-4-42] एवं गङ्गासन्निधानम् मध्वसरोवरे शाश्वतं अभवत् ।

अयं फलितार्थः । पूर्वं अत्र अनन्तसरोवरः आसीत् । श्रीअनन्तेश्वरस्य आज्ञया श्रीमध्वाचार्यं सेवितुं देवनदी गङ्गा आजगाम । अत एव श्रीविबुधप्रियतीर्थश्रीपादाः सरोवरस्य नैरुत्यदिग्भागे भागीरथीमन्दिरं प्रतिष्ठापयामासुः । मकरवाहिनीं भागीरथीं स्थापयामास । अष्टमठाधीशाः अत्रैव स्नान्ति । श्रीकृष्ण-मुख्यप्राणपूजां समाप्य पुनः अस्मिन् सरोवरे दण्डतीर्थं दत्वा भागीरथीं पूजयन्ति । इदानीमपि द्वादशवत्सरान्तरे भागीरथी आगमिष्यति इति मध्वविजये वर्णितम् । विद्यावाचस्पति बन्नञ्जे श्रीगोविन्दाचार्याः स्वानुभूतां घटनां "उडुपिन कृष्ण" इति कन्नडपुस्तके [पृष्टसङ्ख्या-30] निरूपितवन्तः । तदनुसारं 1956-57 तमे वर्षे श्रीअदमारुपर्यायावधिः । श्रीबन्नञ्जेआचार्याः मे मासस्य एकस्मिन् दिने मध्याह्ने गङ्गोद्भवं ददृशुः । स्वल्पकालं सरोवरे जलं अधिकं आसीत् इति स्वानुभवं कथयन्ति ।

सरोवरस्य मध्यभागे सुन्दरं शिलामण्टपम् वर्तते । तत्र कार्तिकशुक्लद्वादश्यां उत्थानद्वादशीविशेषपूजा भवति । क्षीराब्धिः इति तस्य नाम । तद्दिने सायं महापूजा भवति । सप्तोत्सवे नयनानन्दः तेप्पोत्सवोऽपि अत्रैव भवति । सप्तोत्सवस्य अवभृतस्नानं श्रीपादैस्सह भक्ताः अस्मिन् सरोवरे कुर्वन्ति । श्रीपुत्तिगेमठस्य परम्परायां एकविंशतितमः मठाधीशः श्रीराघवेन्द्रतीर्थश्रीपादः सरोवरं शिलामयं चकार ।

मध्वसरोवरस्य ऐशान्यदिशि विशिष्टकाष्ठरथः जनान् आकर्षति । अयम् रथः पर्यायकार्यक्रमात् पूर्वं निर्मीयते । अन्नाराधनाय उपयुज्यते । अन्नब्रह्मा श्रीकृष्णः इति ज्ञापयति ।

## विष्णुमङ्गळग्रामः

श्रीमध्वाचार्यः सञ्चरन् उडुपितः दक्षिणप्रदेशं केरळप्रदेशं आजगाम ।

**जेष्यन् कदाचित्किल कालपालितां**

**दिशं प्रयातोऽच्युतबुद्धिना सह ।**

**समग्रधीः मण्डितविष्णुमङ्गलं**

**विष्णुं जगन्मङ्गलमाननाम सः"** [मध्व.5.30] कासरगोडुमण्डले स्थितं विष्णुमङ्गलम् एयिवान् । इदानीं केरळराज्यस्य आरम्भः कासरगोडुप्रदेशतः । पूर्वं कासरगोडु इति प्रसिद्धः अयं प्रदेशः तौळवमण्डलस्य राजधानी अपि आसीत् । तौळवमण्डलस्य अस्य राजा जयसिंहः आसीत् । जनाः प्रीत्या तं "कबेसिंह" इत्येव प्रीत्या आह्वयन्ति स्म । सोऽपि श्रीमध्वाचार्यस्य प्रियशिष्यः । कासरगोडुमण्डले कूड्लु इति कश्चन ग्रामविशेषः। कूड्लु इत्यस्य केरळभाषायां निर्वचनं नास्ति । तत्रत्य ज्येष्ठाः तौळवविद्वांसः आचार्यद्वयस्य [ಕೂಡಲು] सङ्गमात् [ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರು ಮತ್ತು ಶ್ರೀತ್ರಿವಿಕ್ರಮಪಂಡಿತರು ಕೂಡಿದ ಸ್ಥಳ] इदं नाम प्राप्तं इत्यकथयन् । काव्यस्यास्य कविरपि "पाडि–कुडिल्" इति उभयग्रामजनाः यत्र आलये समवयन्ति सः अमरालयः कुडिल् इति कथ्यते । स एव अमरालयः सम्प्रति "कूड्लुदेवस्थान" [ಕೂಡ್ಲುದೇವಸ್ಥಾನ] इति कर्नाटकभाषायां व्यवह्रियते । एवं अस्मिन् प्रदेशे कूड्लु बहुप्रसिद्धः प्रदेशः । तत्र विष्णुमङ्गलं नाम आयतनं विराजते । सहस्राधिकवर्षीयं आयतनम् ।

कः प्रतिष्ठापयामास ? कदा देवस्थानस्य उदयः अभवत् ? इत्यादिविशये वक्तुंआधारः नास्ति । तत्र जगतां मङ्गलप्रदाता विष्णुः प्रधानदेवः। देवस्थानस्य दक्षिणे भागे चक्रतीर्थनामकं तीर्थं अस्ति ।

**अथ दशशतशोचिष्याप्रयाति प्रतीच्याम्**

**प्रवचनमवसाय्य स्नातुमायात्तटाकम् ।**

**पृथुमतिरिह तावच्छ्रेष्ठसंसर्गलोलैः**

**समगमि सपदि स्वर्निम्नगाद्यैः सुतीर्थैः ॥** [मध्व.14.26] अस्मिन् तीर्थे श्रीमध्वाचार्यः स्नानं अकरोत् ।

श्रीपेजावरमठाधीशाः पूज्याः श्री श्री विश्वेशतीर्थश्रीपादाः सरोवरस्य जीर्णोद्धारं चक्रुः ।

गुरुणा सह श्रीमध्वाचार्यः अस्मिन् देवालये संस्थापूजां समर्प्य भिक्षां स्वीचकार । एनं आचार्यं परीक्षितुकामः कश्चन गृहस्थः कदलीफलसमूहं आनिनाय ।

**भिक्षाप्रदात्राऽत्र परीक्षितुं मुहुः**

**दत्ते प्रभुक्ते कदलीफलोच्चये ।**

**अनेन निर्यत्नमवार्यविस्मयः**

**तमार्यवर्यं विजनेऽवदद्गुरुः ॥** [मध्व.5.31]

भिक्षावसाने फलसेवनाय प्रार्थयामास । तदा अयं आचार्यः द्विशताधिकानि कदलीफलानि अनायासेन बुभुजे । तेन आश्चर्यपूर्णः गुरुः अच्युतप्रज्ञः विजने अपृच्छत् ।

तदा श्रीमध्वाचार्यः स्वस्य वृकोदरत्वं ज्ञापितवान् ।

**अङ्गुष्ठमात्रं जठरे प्रतिष्ठितं**

**जाज्वल्यमानं मम जातवेदसम् ।**

**नित्यं हितं विश्वदहं च वित्त तम्**

**विश्वेशचेता इति सोऽब्रवीत् तदा ॥** [मध्व.5.33]

श्रीमध्वाचार्यः नैकवारं अत्र आजगाम । चातुर्मास्यव्रतं च अस्मिन् आयतने स्वीचकार । तदा तत्र शोभायात्रा आयोजिता पौरजनैः । कबेनाडुजयसिंहस्तु मदनेश्वरवल्लभप्रदेशे [ಮಧೂರು] आयान्तं इमं आचार्यं दृष्ट्वा वाहनात् अवतीर्य ननाम । अस्मिन्नेव देवालये पाडि–कूडेल् उभयग्रामजनाः उपस्थिताः आसन् । श्रीमध्वाचार्यस्य प्रथमशिष्यः श्रीहृषीकेशतीर्थः श्रीमद्भागवतस्य वाचनं अकरोत् । आचार्यश्च व्याख्यानं अकरोत् ।

**"अवदत् स कथां रथाङ्गपाणेः भगवान् भागवते भवापहन्त्रीम् ।**

**अनुकूलगुणस्वरादिभाजा निजशिष्यप्रवरेण वाच्यमाने"** [मध्व.13.40] एवं अपूर्वा विद्वत्सभा सभवत् ।

## अडूरु क्षेत्रम्

श्रीमध्वाचार्यः दक्षिणयात्रां समाप्य पुनः उदीचीं दिशं क्रमात् प्रययौ । उडुपीमार्गे पयस्विनी नदी वर्तते । तस्याः तटे विद्यमानः "अडूरु" इति ग्रामविशेषः । तत्र महालिङ्गेश्वरदेवालयः । तं देवालयं विवेश । **"ग्रामोत्तमान् प्राप्य पयस्विनीतटे विवेश देवायतनं स किञ्चन"** [मध्व.5.49] इति काव्ये निरूपितम् । कार्नूरु मठस्य समीपे वर्तते । विशालं सुमनोहरं देवायतनम् । गजपृष्ठाकारेण शोभते ।

**“नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।**

**त्रैलोक्यनगरारंभमूलस्तम्भाय शम्भवे”** इति शासनश्लोकः प्रथितः ।

कोडगुराज्यस्य राजा लिङ्गराजः महान् शिवभक्तः । सः अस्मिन् देवालये अपरिमितानि स्वर्णाभरणानि समर्पितवान् । तेषु आभरणेषु “लि” इति चिह्नानि सन्ति । “वायुलिङ्ग” नाम्ना अत्र शिवलिङ्गः प्रसिद्धः ।

पौराणिकी कथाऽपि विद्यते । “कुण्डङ्कुळि” [ಕುಂಡಂಕುಳಿ] इति मूलस्थानतः अर्जुनं परीक्षितुं शिवः निर्जगाम । “बेडङ्क” [ಬೇಡಙ್ಕ] अपभ्रष्टसंज्ञा किरातरूपं [ಕಿರಾತವೇಷ] स्वीकृत्य गतवान् । अर्जुनस्तु “कवडिङ्कान” [ಕವಡಿಂಕಾನ] इत्यत्र तपःकुर्वन् आसीत् ।

तत्र किरातरूपी शिवः आच्छति । वराहविशये तयोर्मध्ये कलहः सम्भवति । किरातस्तु अर्जुनम् उद्धृत्य बहुदूरं निष्कासितवान् । अडूरु देवालयस्य समीपस्थे “चिलुमि” इत्यस्मिन् प्रदेशे अपतत् । दुःखेन सन्तप्तः अर्जुनः तत्रस्थां सिकताराशिं स्वीकृत्य लिङ्गमेकं कृत्वा पूजयामास । तेन सुप्रीतः शिवः अर्जुनाय पाशुपतास्त्रम्, पार्वती अञ्जनास्त्रं अदात् । युद्धकारणेन इमं ग्रामं “उरुडूरु” [ಉರುಡೂರು] इति व्यवहरन्ति । अर्जुनतपसः गुहाऽपि अत्र द्रष्टुं शक्यते ।

एतस्मिन् ग्रामे शिक्षादिषडङ्गसहितं वेदाध्ययनं कृतवन्तः समर्थाः षडङ्गवंशजाः[ಷಡಗರು] बहवः आसन् । इदानीमपि षडङ्गवंशजाः तत्र तत्र सन्ति ।अथ कदाचन महालिङ्गेश्वरदेवालये विद्वत्सभा आयोजितासीत् । श्रीमध्वाचार्यः तस्यां विद्वत्सभायां आसीत् । विद्वज्जनाः ऐतरेयशाखासूक्तमेकं वर्णनाय प्रोचुः । तदा गम्भीरया वाचा व्याचख्यौ । तदा सानन्दं साभिनन्दनं स्तुत्वा ते विद्वज्जनाः “अस्य सूक्तस्य अयमपि अर्थः अस्ति” इत्यवोचन् ।

श्रीमध्वस्तु –

**“स्यात्तथेत्थमपि सम्भवितार्थः**

**त्र्यर्थतां श्रुतिषु वित्त दशार्थम् ।**

**भारतं ननु शतार्थमपि स्यात्**

**वैष्णवं पदसहस्रतयं हि”** [मध्व.6.4] मयोक्तः अर्थः भवद्भिरुक्तश्च अर्थः सम्भवति इति अवोचत् । तत्र वेदानां त्रयः अर्थाः । महाभारतस्य दशार्थाः । विष्णुसहस्रनामस्य शतार्थम् [1] इति । श्रुत्वा च अस्य आचार्यस्य वचनं एनं जिगीषवः विद्वज्जनाः विष्णुसहस्रनामस्य शतार्थं वर्णयन्तु इति ऊचुः । तदा श्रीमध्वाचार्यः अनायासेन अर्थशतकं वर्णयामास । तदर्थधारणे असमर्थाः ते प्रार्थयामासुः

**“देवतासु असुलभा प्रतिभा ते**

**मानुषेषु चपलेषु कथा का ।**

**क्षाम्य सौम्य सकलज्ञ नमस्ते**

**ते ब्रुवन्त इति तं किल नेमुः”**[मध्व.6.10]इति ।

तत्क्षेत्रं विशेषक्षेत्रं कर्तुमपि प्रार्थनां चक्रुः । तेषां प्रार्थनया तस्मिन्नेव देवालये महालिङ्गेश्वरस्य पार्श्वे श्रीमहाविष्णुं प्रतिष्ठाप्य पूजां अकरोत् ।

अयं फलितार्थः । अयं देवालयः इदानीं जीर्णोद्धारेण सर्वाङ्गसुन्दरं अभवत् । अस्मिन् क्षेत्रे श्रीमध्वाचार्यः श्रीजनार्दनं देवं प्रतिष्ठापयामास इति बहवः जानन्त्येव । देवस्थानाधिकारिणः इममितिहासं कथयन्ति । विष्णोः सहस्रनामार्थकथनेन विष्णुसन्निधानेन च एतत् क्षेत्रं महाक्षेत्रं अभवत् । गजपृष्ठाकारे देवालयः वर्तते ।

## परस्विनीतटम्

अडूरुग्रामतः सञ्चरन् श्रीमध्वाचार्यः पयस्विनीतटे अन्यदायतनं आजगाम ।

**“प्राप केरळसुमण्डलजातैः अन्यदायतनमायतचेताः”** [मध्व.6.11] इति । पयस्विनी केरळराज्यस्य प्रमुखा नदी [2] ।

**“स्वहेळया पातितपार्थिवव्रजां**
**धीशुद्धिदां केरळभूषणायिताम् ।**
**पयस्विनीं प्रेक्ष्य पथि द्विजार्चितां**
**स भाविनीं अस्मरदत्र चण्डिकाम्”** [मध्व.5.35] केरळभूषणा इति

ख्याता नदी । अस्याः तटे षट्त्रिंशत् सहस्रवर्षादनन्तरं विप्रकुले दुर्गा अवतरिष्यति [3] । दुष्टान् हनिष्यति इति श्रीमध्वाचार्यः दुर्गां अस्मरत् ।

पयस्विनीतटे बैलङ्गडि [ಬೈಲಂಗಡಿ] इति प्रसिद्धः ग्रामविशेषः । सुदर्शनपुर इत्यपि नाम । तत्र श्रीमहाशिवदेवालयः । कासरगोडु समीपे वर्तते । “चेम्नाडु शम्भुलिङ्गेश्वर” [ಚೆಮ್ನಾಡು ಶಂಭುಲಿಂಗೇಶ್ವರ] इति प्रादेशिकनाम । तत्र अत्यन्तप्राचीनशिवालयः आसीत् । परन्तु इदानीं अन्यमतीयानां आक्रमणेन प्रार्थनामन्दिरं अभवत् इति वक्तुं खेदः भवति । “शम्भुनाडु” एव शंभ्नाडु इत्यभवत् । तदेव कालान्तरे [केवलं पञ्चचत्वारिंशद्वर्षाभ्यन्तरे] “चेम्नाडु” इति नामान्तरं अवाप । तत्र इदानीं शिवालयः नास्ति । पूर्वदिशि सरः वर्तते । देवस्थानस्य इतिहासं तदेव स्मारयति । परन्तु इदानीं गन्तुं अपि अवकाशः नास्ति [4] । वेदव्याख्यानस्य साक्षीभूतः प्रदेशः निर्नामः बभूव ।

तस्मिन् देवालये विद्वत्सभा आयोजिता । तत्र वेदशास्त्रचतुराः केरळसुमण्डलजाताः विद्वज्जनाः आसन् ।

ते श्रीमध्वाचार्यं सगौरवं स्वागतं चक्रुः । “न वा उ देवाः क्षुधमिद् वधं ददुरुताऽशितमुप गच्छन्ति मृत्यवः । उतो रयिः पृणतो नोप दस्यत्युतापृणन् मर्डितारं न विन्दते” [ऋ.वे.10.117.1–9] इति दानसूक्तस्य अर्थं निरूपयितुं अपृच्छन् । अस्मिन् सूक्ते दानमहिमा वर्णिता । यः सद्भ्यः दानं करोति तस्य सुशंसनम्, यः न ददाति तस्य निन्दाञ्च करोति सूक्तम् । श्रीमध्वाचार्यः तस्य सूक्तस्य व्याख्यानं अकरोत् । पयस्विन्यां महानद्यां भगवत्सन्निधानं विशेषेण वर्तते [5] ।

अयं फलितार्थः । तत्रस्थानां केषाञ्चन समीपं गत्वा मौखिकसन्दर्शनं कृतवान् । तेषां वाचः श्रूत्वा रोमाञ्चनं अभवत् । तेषां अभिप्रायः एवमस्ति । मोहमदीयाः अत्रत्यान् सर्वान् मतान्तरं चक्रुः । देवालयं परिवर्तनं अकुर्वन् । केचन शिवळ्ळीजना अपि इस्लां मतं स्वीचक्रुः । इदनीमपि एतेषां वंशे संस्कृतप्रभावं स्पष्टोच्चारणं दृष्ट्वा निर्णेतुं शक्यते इति । परन्तु कालः अतीतः । तत्र तस्मिन् काले प्रभावी धार्मिकनायकः नासीत् । एवमेव अनेकेषां क्षेत्राणां स्थितिर्वर्तते इत्यत्र नास्ति सन्देहः ।

## वर्काडिक्षेत्रम्

श्रीमध्वाचार्यः वर्काडि–मञ्जिनाडिग्रामजनानां प्रार्थनया वर्काडिग्रामे चातुर्मास्यव्रतं आचरितुं ऐच्छत् ।

**“इत्थं सद्भिः सद्भिरर्च्यो धरायां**

**चक्रे वासं शेषशय्ये शयाने ।**

**ग्रामे वातैः पाविते काण्वतीर्थैः**

**भक्तप्रीत्या सन्मठेऽनूनबोधः** ”[मध्व.15.140] इति

श्लोके ग्रामविशेषस्य उल्लेखः वर्तते । अयं ग्रामः सान्त्यग्रामतः [ಸಾಂತ್ಯ] पूर्वदिशि अस्ति । पूर्वं प्रादेशिकभाषायां ओर्पाडि [ಒರ್ಪಾಡಿ] इति नाम आसीत् । कालानन्तरे वोर्काडि [ವೊರ್ಕಾಡಿ] इति इदानीं नाम । कासरगोडुमण्डले उत्तरभागे वर्तते अयं ग्रामः । तत्र तस्मिन् काले श्रीमहाविष्णुदेवालयः आसीत् । तत्रैव श्रीमध्वाचार्यः चातुर्मास्यव्रतं स्वीचकार ।

श्रीमध्वाचार्यस्य सेवार्थं अनेकग्रामजनाः आसन् । तेषु मञ्जिनाडि बल्लाळमहोदयः प्रमुखः । [ಮಂಜಿನಾಡಿ ಬಲ್ಲಾಳರು] "मुन्नूरु" ग्रामसम्बन्धात् "मुन्नूराय" इत्येव पूर्वं तान् आह्वयन्ति स्म । ते इदानीं "मञ्जिनाडि" ग्रामसम्बन्धात् बल्लाळः इति नामान्तरं प्राप्ताः । वर्काडिमठतः अनतिदूरे मञ्जिनाडिग्रामः अस्ति ।

तौळवमण्डले ब्राह्मणबल्लाळजनानां "बीडु" [ಬೀಡು] चत्वारि सन्ति । तथा हि निडम्बूरुबीडु, चित्पाडिबीडु, तलेपाडिबीडु, मञ्जिनाडिबीडु इति । तत्र प्रथमं द्वितीयञ्च रजतपीठे वर्तते । तृतीयं चतुर्थञ्च नेत्रावतीनद्याः तीरे । तेषु "तलेपाडिबीडु" इदानीं नास्ति । मञ्जिनाडिबल्लाळमहोदयः चातुर्मास्यकाले विशेषसेवां अकरोत् । तेन सन्तुष्टः श्रीमध्वाचार्यः "ताण्डवकृष्णम्" विग्रहं दत्वा अनुजग्राह । इदानीमपि तेषां मञ्जिनाडिगृहे अस्ति ।

वर्काडिग्रामे चातुर्मास्यकाले श्रीविष्णुमूर्तिं भगवन्तं समभ्यर्चत । पद्मतीर्थः इति नामा श्रीमध्वाचार्यस्य ग्रन्थान् अचोरयत् । भीतस्सन् वर्काडिदेवालयं आजगाम । तदा तत्र वादप्रसङ्गः भवति । तत्रत्य वादकथां सङ्गृह्य तत्त्वोद्योतग्रन्थं [6] रचयामास ।

परन्तु दुर्दैववशात् कालान्तरे वर्काडिग्रामस्य सः देवालयः नष्टः । परमतीयानां आक्रमणेन ध्वस्तः अभवत् ।

परकीयानां आक्रमणभीत्या तं मूर्तिं तत्रत्य कूपे निपपेतुः ।। इतिहासज्ञाः शासनानुसारेण स्थळस्य अन्वेषणं अकुर्वन् । स्थळशोधनसमये अपूर्ववस्तूनि तत्र लब्धानि । तदनुसारं आगमोक्तरीत्या देवालयं निर्मातुं निश्चित्य कार्यप्रवृत्ताः । परमपूज्यानां श्रीपलिमारुमठाधीशानां आध्यक्षे भव्यदेवालयं निर्मिमिरे । सुदैवात् ऐतिहासिकक्षेत्रस्य सन्दर्शनस्य अवकाशः प्राप्तः ।

## कण्वतीर्थक्षेत्रम्

वर्काडिचातुर्मास्यकाले एकदा सूर्यग्रहणपर्वकालः समागतः । ग्रहणस्नानार्थं श्रीमध्वाचार्यः अनतिदूरे वर्तमानं कण्वतीर्थं जगाम ।

**"आर्द्राङ्गाः सपदि निमज्जनात् सरस्याम्**

**कण्वस्य द्विजवृषभस्य वल्लभायाम् ।**

**तत्रायन् खरकिरणोपरागहेतोः**

**ग्रामीणाः अपि सकलाः सबालवृद्धाः"** [मध्व.16.11] इति कविः कण्वतीर्थस्य कथां निरूपितवान् । ग्रामस्थाः आबालवृद्धाः आचार्येण साकं आजग्मुः । समुद्रतीरे आयान्तं श्रीमध्वाचार्यं दृष्ट्वा सज्जनाः मुमुदुः । ग्रहणात् पूर्वं तस्मिन्नेव तीरे स्वच्छे विकटतटासने निषण्णस्सन् श्रीमध्वाचार्यः ऐतरेयोपनिषदः प्रवचनं आरभत । समुद्रस्य परिसरे गाम्भीर्यध्वनिना आचार्यः प्रवचनं अकरोत् । धन्यतां अनुभूताः सज्जनाः **"सन्मानं विपुलहृदो विधाय भक्त्या"** [मध्व.16.19] सगौरवं सन्मानं चक्रुः । ग्रहणकालः आगतः । सर्वे स्नानार्थं सिद्धाः । तदा अतिप्रबलाः तरङ्गाः जननिकरान् आक्रान्ताः । तेन आक्रमणेन सर्वे जले पतिताः अभूवन् । तेषु श्रीमध्वाचार्योऽपि अपतत् ।

तं दृष्ट्वा चित्तक्षोभकराः नीचाः नीचवचनेन अपहास्यं अकुर्वन् । तदा श्रीमध्वाचार्यः कटाक्षेण अम्बुधिं ददर्श ।

**"आक्रान्तोऽधिकगुरुणा स तेन तावत्**

**मुञ्चन् सञ्चलनमभूत् तटाकदेशः"**[मध्व.16.23] इति काव्योक्तरीत्या

तेन भीतः अम्बुधिः सञ्चलनं हित्वा तटाकसदृशः अभवत् । इदानीमपि अस्मिन् प्रदेशे समुद्रः शान्तः अस्ति ।

मङ्गलूरु–कासरगोडुमुख्यमार्गे तलपाडिग्रामस्य अनतिदूरे कण्वतीर्थग्रामः अस्ति । अत्र कण्वमुनिः तपश्चकार । कण्वतीर्थे ब्रह्मलिङ्गेश्वरदेवालयः वर्तते । प्रायः तौळवमण्डले अयमेकः एव ब्रह्मलिङ्गेश्वदेवालयः । कण्वमुनिना प्रतिष्ठापितः देवालयः । जीर्णोद्धारः सम्पन्नः । पार्श्वे मठः अस्ति । अग्रे कण्वसरोवरः अस्ति । मठे कण्वमुनिना आराधितः श्रीरामः प्रधानदेवः । आञ्जनेयमूर्तिरपि अस्ति । अयं मठः श्रीपेजावरमठस्य अधीने वर्तते । मठस्यापि जीर्णोद्धारकार्यक्रमः अभवत् । बहवः यात्रिकाः आगच्छन्ति । पूर्वं यात्रिकाः अस्मिन्मार्गे यात्रार्थं आगत्य अत्र समुद्रे स्नात्वा पुनः कण्वतीर्थे स्नात्वा श्रीरामं ब्रह्मलिङ्गेश्वरं च पूजयन्ति स्म ।

उडुपि श्रीकृष्णस्य आराधकानां अष्टमठाधीशानां द्वन्द्वमठव्यवस्थां श्रीमध्वाचार्यः अत्रैव कारयामास । अश्वत्थवृक्षस्य चतुर्षु दिक्षु यतिद्वयं उपविष्य द्वन्द्वमठव्यवस्थां अकरोत् । अयं प्रदेशः दर्शनीयः ।

अस्मिन् मठे श्रीविजयध्वजतीर्थानां वृन्दावनं वर्तते । श्रीपेजावरमठपरम्परायां समागताः एते श्रीमद्भागवतस्य व्याख्यानं चक्रुः । एतेऽपि स्वतपसा प्रकृतिनियन्त्रणम् अकुर्वन् । वृक्षं शान्तं अकुर्वन् ।

अत्र प्रतिवर्षं वैशाखशुक्लतृतीयायां विशेषोत्सवः भवति । शिवरात्रिदिनेऽपि विशेषोत्सवः प्रचलति ।

## पारन्तीक्षेत्रम्

श्रीमध्वाचार्यः सञ्चरन् सुब्रह्मण्यस्य मुख्यमार्गं आजगाम । ततः पारन्तीक्षेत्रं [7] अगमत् । तत्र पर्वतोस्योपरि गन्तुं शिष्यान् आदिदेश । साश्चर्यं श्रुत्वा शिष्याः मार्गं कुर्वन् जग्मुः । उपरि बहुविशालप्रदेशः । तत्र श्रीमध्वाचार्यः स्थळविशेषं सूचयामास । अन्वेषणे पञ्चमृत्पिण्डानि आसन् । [शिलामयानि] तानि प्रक्षाळनं चक्रुः । तदा आचार्यः भीमावतारस्य कथां अवदत् ।

पारन्तीं गन्तुं अयं क्रमः । उप्पिनङ्गडिसमीपे कुमारधारानदीं तीर्त्वा बेळ्तङ्गडिमार्गे गन्तव्यम् । ततः मञ्चन्तारुग्रामः । ततः दक्षिणे भागे कक्कपदवु इत्यस्मिन् मार्गे गन्तव्यम् । तत्र पर्वतोपरि रमणीयप्रदेशे पारन्तीक्षेत्रं दृष्यते । तत्र अत्यन्तप्राचीनपञ्चलिङ्गेश्वदेवालयः अस्मान् आकर्षति । देवस्थानस्य प्राङ्गणे धात्रीवृक्षं अस्ति । अत एव कार्तिकमासे धात्रीयागं आचरन्ति । शिवरात्रिदिने तथा मध्वनवम्यां विशेषपूजा आचर्यते ।

पूर्वं पाण्डवाः वनवासे सञ्चारक्रमेण अत्र आगताः । ते सर्वे जगत्कल्याणार्थं अनिरुद्ध–प्रद्युम्न–सङ्कर्षण–वासुदेव–नारायणस्वरूपं पञ्चलिङ्गं प्रतिष्ठापयामासुः । तदा द्रौपदी बलिसलिलं दद्यात् ।

**“भीमत्वे सह सहजैः प्रतिष्ठितः प्राक्**
**पञ्चात्मा मुररिपुरञ्चितो यदत्र ।**
**पाञ्चाल्या बलिसलिलं समम् ददत्या**
**सोऽस्मार्षीत् तमिममथ प्रपूज्यपूज्यः”** [मध्व.16.37]

`श्रीमध्वाचार्यः स्वावतारस्य भीमावतारस्य कार्यं स्मृत्वा आगच्छत् । नैवेद्यविहीने देवालये पूजादिव्यवस्थां कारयामास । ग्रामाधिपतिं राजानञ्च आहूय अल्पकाले एव पूजादिव्यवस्थां कारयितुं आदिदेश ।

पर्वतस्य सानुप्रदेशे जनसञ्चारहीनः । अत एव पूजादिधार्मिककार्यक्रमाः अपि नासन् । **"पारन्तीसुरसदनम् विशालसंवित् सम्प्राप्तः खलु सुचिरान्निवेद्यहीनम्"** [मध्व.16.36] इति काव्योक्तक्षेत्रं इदानीं जीर्णोद्धारेण रमणीयस्वरूपं अवहत् । बहुकालतः अज्ञातवासं अनुभूतः प्रदेशः । परम्पूज्याः श्री श्री विद्यामान्यतीर्थश्रीपादाः देवालयस्य अन्वेषणार्थं कृतसङ्कल्पाः विद्वज्जनानां सम्मेळनं कारयामासुः । विद्यावाचस्पति श्री बन्नञ्जे गोविंदाचार्यः पूज्यानां आशयं पूरयामास । तदनुसारं पूज्यश्रीपादानां मार्गदर्शने पुनःप्रतिष्ठाकार्यक्रमः वैभवेन सुसम्पन्न : ।

अयं फलितार्थः । भीमावतारस्य मध्वावतारस्य च अभेदसम्बन्धः अनया कथया ज्ञायते । नोचेत् कथं तत्र गमनम् । सर्वज्ञस्यैव ईदृशं कर्म कर्तुं साध्यम् । सर्वे माध्वापीठाधीशाः अत्रागत्य पूजां विधात्स्यन्ति ।

## कोक्कडक्षेत्रम्

श्रीमध्वाचार्यः सञ्चारक्रमेण कोक्क डक्षेत्रं आजगाम । पूर्वं "कुक्कुटपुरम्" इति ख्यातः ग्रामः कोक्कड इत्यभूत् । अत्र वैद्यनाथेश्वरः विराजते । धर्मस्थळतः बेङ्गळूरु मार्गे वर्तते । बेळतङ्गडिमण्डले अयं प्राचीनतमः देवालयः । एकस्मिन्नेव क्षेत्रे त्रयः देवालयाः सन्ति । वैद्यनाथेश्वरः स्वयम्भूतः । पार्श्वे सरोवरः वर्तते । सरोवरस्य मध्ये श्रीकण्ठेश्वरदेवालयः विद्यते । भगवतः परमानुग्रहेण जलेऽस्मिन् रोगनिरोधकशक्तिः अस्ति । जीर्णावस्थायां वर्तते ।

शिवरात्रिदिने विशेषोत्सवः भवति । सहस्रवर्षेतिहासः अस्य देवालयस्य [8] देवालयस्य पार्श्वे श्रीविष्णुमूर्तिदेवालयः अपि वर्तते । सज्जनानां प्रार्थनयाा श्रीमध्वाचार्यः अत्र आजगाम ।

**"क्षेत्राग्र्यं त्रिभुवनवैद्यनाथनाथं**

**प्रस्थाय प्रचुरतरान्तरः प्रभावी ।**

**श्रीकृष्णामृतपरमार्णवाभिधानां**

**चक्रे सद्वचनततिं स्वभक्तभूत्यै"** [मध्व.16.40] इति काव्योक्तदिशा "क्षेत्राग्र्यं" इति विशेषेण क्षेत्रस्य महिमा ज्ञायते ।

श्रीमध्वाचार्यः स्वभक्तानां क्षेमाय श्रीकृष्णामृतमहार्णवं ग्रन्थं चकार । [9] संसारे निमग्नानां अमृतस्वरूपं ग्रन्थं ददौ । अष्टात्रिंशत्यधिकद्विशतश्लोकात्मके[238] ग्रन्थे पुराणानां वचनानि सङ्गृहीतानि । स्वभक्तः इडेपडित्ताय[ಇಡೇಪಡಿತ್ತಾಯ] विप्रः श्रोत्रियः आसीत् ।

तस्मै ग्रन्थं उपदिदेश । अत्रैव वैद्यनाथस्य पार्श्वे धन्वन्त्रिरूपिणं महाविष्णुं प्रतिष्ठापयामास । तेन हरि–हरक्षेत्रं अभूत् । इदानीमपि अनारोग्यपीडिताः जनाः अत्र आगत्य सेवां विधाय आरोग्यभाग्यं प्राप्नुवन्ति ।

## यज्ञनारायणमठः

वैद्यनाथेश्वरदेवालयतः अरसिनमक्कि इति ग्रामस्य मार्गे गत्वा अनतिदूरे "सौतडक" इति ग्रामः आगच्छति । तत्रैव प्रसिद्धविनायकदेवालयः विराजते । ततः अनतिदूरे इडेपडेत्तायगृहं अस्ति । "इडेपाडि" इति प्रदेशे वासात् इडेपडित्ताय इति नाम तद्वंशस्य । इदानीं "यडेपडित्ताय" इति व्यवहारे वर्तते । एते अग्निहोत्रिणः सदाचाररताः षट्कर्मिणः आसन् ।

तौळवमण्डलस्य “श्रेष्ठद्विजाः” इति ख्याताः । एतेषां सदाचारत्वं विज्ञाय श्रीकृष्णामृतमहार्णवं ग्रन्थं उपदिदेश । अत एव “स्वभक्तभूत्यै” इति मध्वविजये वर्णितम् । अस्मिन् मठे कानिचन दिनानि श्रीमध्वाचार्यः उवास ।

श्रीमध्वाचार्यः इडेपडित्तायविप्रस्य गृहे यागमेकं कारयामास । अनुग्रहरूपेण बहुसुन्दरां यज्ञनारायणप्रतिमां यज्ञसाधनं सृक्सृवं च ददौ । तद्गृहं इदानीं “यज्ञनारायणमठः” इति ख्यातः । अतीव निर्जने प्रदेशे विद्यमानेऽस्मिन् मठे यज्ञनारायणप्रतिमां द्रष्टुं अवकाशः वर्तते । अपूर्वां प्रतिमां द्रष्टु बहवः आगमिष्यन्ति । इदानीं भक्तजनानां सहकारेण परमपूज्यानां श्रीपेजावरमठाधीशानां अनुग्रहेण च जीर्णोद्धारः सम्पन्नः । अस्मिन् मठे भक्ताः यागादिकार्यं आचरन्ति ।

एवं श्रीमध्वाचार्यः तौळवमण्डले प्रायः एकादशशिष्येभ्यः भगवद्विग्रहं दत्वा अनुजग्राह ।

1. मूडुल्लायः – श्रीलक्ष्मीनारायणप्रतिमा
2. तोटन्तिल्लायः – कुञ्ची श्रीकृष्णप्रतिमा
3. कल्लूरायः – गोपालकृष्णप्रतिमा
4. कुञ्जण्णायः – श्रीकृष्णप्रतिमा
5. पाङ्गण्णायः – श्रीविष्णुमूर्तिप्रतिमा
6. मञ्जिनाडि बल्लाळः – ताण्डवश्रीकृष्णः
7. कावुमठे पेजत्तायः–[श्रीत्रिविक्रमपण्डितः] – श्रीवत्सनारायणप्रतिमा
8. कोडिपाडित्तायः – श्रीअनन्तासनप्रतिमा
9. एर्कडित्तायः – श्रीभूवराहप्रतिमा

10. एर्किमठे नूरित्तायः – श्रीलक्ष्मीचेन्नकेशवप्रतिमा

11. इडेपडित्तायः – श्रीयज्ञनारायणप्रतिमा

तेषु विग्रहेषु इदानीं त्रयः विग्रहाः उद्यावरमठे सन्ति ।

## उजिरेक्षेत्रम्

श्रीमध्वाचार्यः नेत्रावतीं तीर्त्वा उजिरेक्षेत्रं [10] आजगाम । तत्र बहुसङ्ख्याकाः विद्वज्जनाः श्रीमध्वाचार्यस्य आगमनोत्सुकाः आसन् । कविः

**"स ग्रामं परममपि यात उच्चभूतिं**

**विद्वांसः क्व कुहरकूपदर्दुराभाः ।**

**इत्यूचे मदमतिमानिनोऽखिलज्ञम्**

**मन्यस्य क्षपयितुमेव तज्जनस्य"** [मध्व.16.41]

इति सन्निवेशं अवर्णयत् । तत्रत्याः पण्डितम्मन्यमानाः आसन् । अयं श्रीमध्वाचार्यस्तु यतिः । यज्ञानधिकारित्वान् यज्ञाङ्गं न जानाति इति निश्चक्रिरे । अतः कर्मार्थश्रुतिगहनार्थखण्डभावं अपृच्छन् । तेषां मदं नाशयितुं तान् आबभाषे । चतुर्मुखब्रह्मणा विनियुक्तान् नाराशंस्यादिनामकमन्त्रभेदान् [11] व्याचख्यौ । निरुत्तराः ते पलायनञ्चक्रुः[12] । आचार्यस्तु महानाम्नीनां ऋचां अर्थविवरणं कृत्वा सपदि लेखयामास ।

**"तस्यार्थं वचनचयस्य तं ब्रुवाणः**

**स्थैर्यार्थं सपदि स लेखयाम्बभूव"** [मध्व.16.45] इति काव्योक्तरीत्या

तं अर्थविवरणं "कर्मनिर्णयः" इति नाम्ना व्यवहरन्ति । अस्यां शिलायां उपविष्य ग्रन्थनिर्माणं अकरोत् सा शिला इदानीमपि देवालयस्य प्राङ्गणे विराजते । तत्र श्रीमध्वाचार्यस्य भव्यप्रतिमां प्रतिष्ठापयामासुः ।

कोक्कडमार्गतः बेळ्तङ्गडिमार्गे उजिरेग्रामः वर्तते । "उच्चभूति" इति संस्कृते नाम । नामानुसारं अयं प्रदेशः विशालः ।

भूप्रदेशः उच्चभूभागे देवालयः अस्ति । अत एव तौळवभाषायां "जेर्यो" [ಜೇರ್ಯೊ] इति । तौळवमण्डले एवमेव प्रदेशस्य नाम । उदा–

"कक्केयो" [ಕಕ್ಕೆಯೊ] इति ग्रामविशेषः । यस्मिन् प्रदेशे काकाः बहुसङ्ख्यायां सन्ति तस्य प्रदेशस्य नाम "कक्केयो पद" [ಕಕ್ಕೆಯೊ ಪದವು] इति । तं प्रदेशं इदानीं **"कक्कपदवु"** [ಕಕ್ಕಪದವು] इत्येव व्यवहरन्ति ।

उळियो इति एकः ग्रामः । तत्र हरिणः अधिकसङ्ख्यायां आसन् । अतः तं ग्रामं "उळियो" [ಉಳಿಯೊ] इति आह्वयन्ति स्म । इदानी तदेव नाम "उळि" [ಉಳಿ] इति व्यवहरन्ति । एवमेव जेर्यो उजिरे बभूव ।

अत्र श्रीजनार्दनः अधिदेवः । मन्दहासमृदुसन्दरमूर्तिः । ऐतिहासिकमहत्वपूर्णः देवालयः । बृहद्गात्रदेवालयः अयं गजमृष्ठाकारे वर्तते । क्रि.श दश शतमानस्य मूर्तिः इति अत्रत्य शिलाशासनेन ज्ञायते । अस्मिन् देवालये मकरसङ्क्रमणे वार्षिकनवदिनोत्सवः भविष्यति । अन्तिमदिने महारथोत्सवः वैभवेन महानन्दं जनयति ।

## कावुगोळिक्षेत्रम्

कूड्लुपरिसरे कावुगोळि श्रीविष्णुमूर्तिदेवालयः अस्ति । अयमपि अतिप्राचीनः देवालयः । लिकुचवंशजा एव निर्वहन्ति स्म एनं देवालयम् । कासरगोडु–कुम्बळे मार्गे कासरगोडुसमीपे अस्ति । कावुमठस्य अनतिदूरे एव विद्यते अयं देवालयः । गोळिवृक्षविशेषः बृहदाकारेण वर्तते । अत्र प्रधानदेवः श्रीविष्णुमूर्तिः । लिकुचवंशजः श्रीत्रिविक्रमपण्डितः अस्मिन् देवालये विशेषसेवां अकरोत् । तेनैव प्रभावेण अस्य काव्यस्य कविः श्रीनारायणपण्डितः समजनि ।

अस्मिन् देवालये श्रीमध्वाचार्यः ब्रह्मसूत्रभाष्यस्य उपन्यासं अकरोत् । ग्रामस्थाः सर्वे तत्र समागताः आसन् । श्रीत्रिविक्रमपण्दिताचार्यः अपि आसीत् । अत्रैव श्रीमध्वाचार्य–श्रीत्रिविक्रमपण्डितार्ययोर्मध्ये सप्ताष्टानि दिनानि यावत् वादः सम्पन्नः । श्रीमध्वाचार्यस्य वादसरणेः वैभवं **"नात्यत्वरा नातिरया नस्खलन्ती निरन्तरा ।**

**अनानावयवेत्येव दवीयोभिः प्रतर्किताः"** [मध्व.15.4] इति कविः अवर्णयत् । आचार्यस्य व्याख्यां श्रुत्वा श्रीत्रिविक्रमाचार्यः प्रणम्य "शिष्टोऽसौ क्षम्यतां नाथ चापलम् । पदपद्मरजोदास्यं धृवं मे दीयतां" [मध्व.15.70] इति आचष्ट । एवं शिष्यभावं प्राप्ताय श्रीत्रिविक्रमार्याय भाष्यं व्याख्यातवान् [13] । श्रीत्रिविक्रमार्यस्य प्रार्थनया अत्रैव बहूनि दिनानि स्थित्वा बहून् सद्ग्रन्थान् चकार [14] देवालयस्य पुरतः उभयभागे वृक्षद्वयस्य अधः वेदिका दृश्यते । तत्रैव आचार्यद्वयौ उपविष्टौ । सन्तुष्टः श्रीमध्वाचार्यः अस्मिन् देवालये बलिमूर्तिं मन्थानकृष्णं अदात् । इदानीं बलिमूर्तिः अत्र नास्ति । अयं देवालयः श्रीपेजावरश्रीपादानां आध्यक्षे वर्तते ।

## कावुमठः

कावुगोळिदेवस्थानस्य पुरतः कावुमठः अस्ति । लिकुचकुलीनानां जन्मभूमिः । विद्वज्जनानां साधनभूमिः । अस्यां भुवौ अवतीर्णाः संस्कृतवाङ्मये अनुपमयोगदानं ददुः । अस्मिन्नेव मठे लिकुचकुलीनः विद्वद्वरेण्यः श्रीत्रिविक्रमपण्डितः आसीत् । अयं पण्डितः हरि–हरयोः उपासकः । अस्य मठस्य परिसरे अतिप्राचीनौ श्रीशङ्कर–श्रीनारायणदेवालयौ वर्तेते । अस्य शङ्करदेवस्य परमानुग्रहेण श्रीशङ्करपण्डितः जज्ञे ।

श्रीनारायणस्य सेवया श्रीनारायणपण्डितः जज्ञे । अत एव नारायणपण्डितः विष्णुस्तुतिं शिवस्तुतिञ्च अकरोत्

कावुगोळिसभां समाप्य श्रीमध्वाचार्यः श्रीत्रिविक्रमपण्डितस्य प्रार्थनया कावुमठं आजगाम । तत्र आचार्याय महावैभवस्वागतं चक्रुः । लिकुचवंशजानां वाङ्मयसेवां दृष्ट्वा सन्तुष्टः श्रीमध्वाचार्यः वैष्णवदीक्षां दत्वा श्रीवत्सनारायणविग्रहं पञ्चमुद्राञ्च अदात् ।

प्राचीनव्याख्यानकाराः लिकुचवंशजान् पण्डितान् बहुधा अस्तुवन् [15] ।

अस्मिन् मठे इदानीं श्रीत्रिविक्रमण्डितस्य श्रीनारायणपण्डितस्य च वृन्दावनौ विद्येते । बहुविशालः प्रदेशः । मठस्यास्य प्रारम्भे मध्वविजयस्तम्भ : वर्तते । तत्र शिलामध्ये अङ्कुशः दृश्यते । श्रीत्रिविक्रमपण्डितः एव स्थापितवान् इति इदानीं वर्तमाना तद्वंशीयाः कथयन्ति । माध्वजनानां अत्याकर्षकप्रदेशः । अयं मठः एव श्रीमध्वाचार्यस्य महिमां चकास । इदानीं अत्र जीर्णोद्धारप्रक्रिया प्रचलति ।

## सरिदन्तरे एर्किमठः

**"आयास्यन् किल सरिदन्तराख्यदेशम्**

**ग्रीष्मे निर्जलमिह शुश्रुवांस्तटाकम् ।**

**तत्काले परमभिवर्षयन् घनौघं**

**तत्पूर्त्यै व्यधित कुतूहलं जनानाम्"** [मध्व.16.38] इति मध्वविजये प्रदेशविशेषस्य सूचना वर्तते । "सरिदन्तरम्" [ಇಡೆತುರೆ] इत्यस्य नेत्रावती–कुमारधारानद्योः मध्यन्तरप्रदेशः इत्यर्थः । उप्पिनङ्गडि–सुब्रह्मण्यक्षेत्रस्य मुख्यमार्गे वर्तते । तत्र एकः ग्रामः । तत्र नूरित्तायवंशीयानां गृहं अस्ति ।

तत्र श्रीमध्वाचार्यः सञ्चरन् आजगाम । तदा ग्रीष्मकालः । स्नानार्थमपि सरोवरे जलं नासीत् । तेषां प्रार्थनया अनुग्रहोन्मुखः श्रीमध्वाचार्यः स्वमहिम्ना अवर्षयत् ।

केवलं तत्तटाकपूर्त्यै अभिवर्षयन् तत्रत्य जनानां कुतूहलं अजनयत् । इदानीं "दण्डतीर्थम्" इति तत्सरोवरस्य नाम ।

श्रीमध्वाचार्यः नूरित्तायमहोदयस्य श्रद्धां परिगण्य श्रीलक्ष्मीचेन्नकेशवविग्रहं अनुग्रहरूपेण अदात् । श्रीकृष्णामृतमहार्णवग्रन्थस्य मङ्गळाचरणं अत्रैव अकरोत् [16] । अस्मिन् परिसरे बहवः सुजीविनः आसन् । तेषां उद्धरणाय तेभ्यः वैष्णवदीक्षां दातुं मुद्राद्वयं अयच्छत् । एवं श्रीमध्वाचार्यः विशेषानुग्रहं अकरोत् । विशेषानुग्रहभाग्यसम्पन्नः नूरित्तायः वैष्णवदीक्षां यच्छन् उपदेशादिना जनान् प्रेरयामास । ततः नूरित्तायः "उपाध्यायः" इति ख्यातः अभवत् । तद्गृहं "मठः" अभवत् । चातुर्मास्यस्य शयनी एकादश्यां इदानीमपि मुद्राङ्कनं भवति । श्रीवदिराजश्रीपादाः अत्र वेणुगोपालविग्रहं मुख्यप्राणविग्रहञ्च प्रतिष्ठापयामास । तेन इदानीं "एर्कीमठः" इति नाम्ना व्यवह्रियते । ईरः मुख्यप्राणः । तस्य सम्बन्धात् अयं मठः एर्कीमठः । माध्वेतिहासे यतीन् विहाय मुद्राङ्कनाधिकारः केवलं अस्मै नूरित्तायगृहस्थाय प्रदत्तः इति विशेषविचारः । अपि च मध्वप्रदत्तमुद्राद्वयं [सुदर्शनचक्रौ] अन्यत्र कुत्रापि द्रष्टुं न लभ्यते । अत एव अत्र बहवः जनाः आगमिष्यन्ति ।

## कान्तावरक्षेत्रम्

कान्तेश्वरक्षेत्रं दक्षिणकन्नडजिल्लायां अतिपुरातनं क्षेत्रम् । इदं शैवक्षेत्रम् । जैनाः अत्र बहुसाङ्ख्याकाः । कान्तावरस्य "श्रीकान्तापुर" इति प्राचीननाम ।

भगवतः लक्ष्मीनारायणदेवस्य पुरं इति कारणेन श्रीमध्वाचार्यस्य प्रियग्रामः । कार्कळ–मूडुबिद्रे मुख्यमार्गे बेळवायिग्रामतः पश्चिमदिशि गन्तव्यम् ।

प्रशान्तपरिसरे वर्तते अयं देवालयः ।

**“श्रीकान्तेश्वरसदनेऽनयत् किलैको**

**यस्त्रिंशन्नरवरनीतकेतुयष्टिम्** ।

**आहत्या गुरुगदयैव नारिकेलात्**

**यो लेभे तरलतरात् फलानि कामम्”** [मध्व.16.26] इति कविः वर्णयति । इदं क्षेत्रं श्रीमध्वाचार्यः आगच्छति । तत्र भगवतः दर्शनानन्तरं प्रवचनकार्यक्रमः आसीत् । तदा तत्र महाबलशाली गण्डवाटः कोडिंजाडि [इत्यपभ्रष्टभाषा] इति नामविशिष्टः [ಕೋಡಿಂಜಾಡಿ] बली आसीत् । इदानीं कोडिम्बाडि इति नाम [ಕೋಡಿಂಬಾಡಿ] व्यवहारे वर्तते । सः स्वानुजेन समागतः । श्रीमध्वाचार्यस्य शक्तिपरीक्षार्थं आजगाम । आचार्यस्तु बलप्रदर्शनाय आदिदेश । सः गण्डवाटः पूर्वं अत्रैव देवालयस्य महतोभारभूतं ध्वजस्तम्भं एकाकी एव स्थापितवान् । आचार्यानुमतिं दृष्ट्वा हर्षचित्तः सः सानुजस्सन् आचार्यस्य कण्ठं उभयतः युगपत् गृहीत्वा निष्पेष्टुं परमं प्रयत्नं चकार । परन्तु असमर्थौ अतिश्रान्तौ तौ भुवौ निपततुः । श्रीमध्वः भीमबलं स्मारयामास [17] । ततः तौ धरास्थां आचार्यस्य अङ्गुलीमपि उद्धर्तुं न अशकताम् । एवं श्रीनरसिंहोपासकः श्रीमध्वाचार्यः अस्मिन् देवालये गरिमासिद्धिं [18] दर्शयामास ।

कान्तावरक्षेत्रं पुराणप्रसिद्धं क्षेत्रम् । अस्मिन् परिसरे पूर्वं झञ्झावातस्य असुरस्य पिपीलिकासुरः अवृष्टिकासुरश्चेति पुत्रद्वयौ अतिदृप्तौ मुनिजनहिंसकौ आस्ताम् । तदा अम्बरीष नामा महामुनिः पार्वतीपरमेश्वरौ आराधयामास । आराधनेन सन्तुष्टः परमेश्वरः असुरौ अहनत् ।

तेन सञ्जातसम्भ्रमः मुनिः सदा अत्रैव सन्निधातुं अयाचत् । तथाऽस्तु इति आभाष्य कान्तया सह सन्निहितः अभवत् । अत एव अस्य देवालयस्य "कान्तेश्वर" इति नाम प्राप्तम् । बहुप्राचीनदेवालयः अयं इति बेळमण्णुदेवालये प्राप्तेन शिलाशासनेन ज्ञायते । पञ्चलोहमयः परमेश्वरलिङ्गः सूर्यकिरणानुसारं त्रिकाले त्रिवर्णं प्राप्नोति । प्रतिदिनं आगमोक्तप्रकारेण पूजाविधिः भवति । मकरमासस्य सप्तमे दिने वार्षिकरथोत्सवः भवति ।

अस्य देवालयस्य अनतिदूरे कान्तावरमठः वर्तते । तत्रैव श्रीमध्वाचार्यः आसीत् इति ज्येष्ठाः वदन्ति । तत्र श्रीमध्वपूजितश्रीनरसिंहविग्रहः आसीत् । सः विग्रहः इदानीं श्रीपलिमारुमठे विद्यते । मठः अपि श्रीपलिमारुमठस्य अधीने वर्तते [ चित्रं पृष्ठे]। श्रीवादिराजतीर्थश्रीपादाः अपि अत्र आगत्य देवालये श्रीलक्ष्मीनारायणप्रतिमां स्थापयामासुः । अपूर्वः अवश्यं दर्शनीयः देवालयः ।

## नरसिंहगेहम्

श्रीमध्वाचार्यः एकदा नरसिंगनामकं ग्रामविशेषं आजगाम । अयं ग्रामः उप्पिनङ्गडिमण्डले वर्तते । तत्र अत्यन्तप्राचीनः श्रीनरसिंहदेवालयः वर्तते । देवस्थानस्य परितः अन्यमतीयाः एव पूर्णरूपेण वसन्ति । अत एव बहवः गन्तुमपि भीता भवन्ति । केवलं अर्चकानां गृहं अस्ति । संरक्षणाभावात् बहुशिथिलावस्थां प्राप्तः । जनानां अभावेन देवस्थानोऽपि कथमभिवृद्धिं प्रातुं समर्थोऽभवति । श्रद्धावन्तः एव देवस्थानस्य सर्वतोमुखाभिवृद्ध्यर्थं सर्वदा प्रयतन्ते खलु ।

एकदा तत्र उत्सवविशेषः आसीत् । शिष्यैः परिवृतः श्रीमध्वाचार्यः देवालयं आजगाम । एनं आचार्यं द्रष्टुं जनसमूहः तत्र आसीत् ।

यः पूर्वं बलप्रयेगे पराजितः आसीत् सः गण्डवाटः : तत्रासीत् । श्रीमध्वाचार्यः तत्रत्यं नरसिंहं देवं सम्पूज्य बहिः आजगाम । विशालप्राङ्गणप्रदेशः । तत्र एकः वटुः आसीत् । तं आहूय तस्योपरि उपविश्य नरसिंहगेहं परितः आजगाम । प्रदक्षिणं अकरोत् ।

**“निर्यत्नं वटुमधिरुह्य मन्दहासी**

**स प्रायात् इह परितो नृसिंहगेहम् ।**

**ऐश्वर्यैरिति लघिमादिकैरुपेतो**

**मध्वोऽभूत् त्रिभुवनचित्ररत्नराजः”** [मध्व.16.30] इति वचनानुसारं

विस्मयकारिणं आचार्यं दृष्ट्वा “त्रिभुवनचित्ररत्नराजः” इति जनाः अस्तुवन् । श्रीमध्वाचार्यः “लघिमासिद्धिं” प्रदर्शयामास । प्रतिवर्षं अत्र नरसिंहजयन्ती दिने विशेषोत्सवः भवति । श्रीनरसिंहमूर्तिः बहुसुन्दरः । योगारूढश्च । प्रदक्षिणाप्रदेशः बहुविस्तारः वर्तते । श्रीनरसिंहस्य सन्निधानेन “नृसिंहगेहम्” इति ग्रामस्य नाम आसीत् । इदानीं “नाश्य” इत्येव आह्वयन्ति । [ चित्रं पृष्ठे]

## कोडिपाडि

कोडिपाडिग्रामः कबक–पुत्तूरु मार्गे अनतिदूरे वर्तते । अत्र श्रीजनार्दनः देवः प्रधानः । देवस्थानस्य पृष्ठतः सरोवरः वर्तते । तत्र गङ्गासन्निधानं विद्यते । सिंहमासस्य अमायां तत्र स्नानेन चर्मरोगनिवारणं भवति इति तत्रत्य महिमा । अत एव तद्दिने सहस्राधिकाः जनाः स्नातुं आगमिष्यन्ति । देवालये प्रतिदिनं त्रिकालपूजा भवति । वृषभमासस्य दशमे दिने वार्षिकोत्सवः सम्भवति ।

मध्वविजये इमं ग्रामं "प्राग्रवाट" इति सूचितवन्तः । श्रीमध्वाचार्यः कावुमठस्य कार्यक्रमं समाप्य इमं ग्रामं ग्रामं आजगाम । अत्रत्य श्रीजनार्दनदेवालये चातुर्मास्यव्रतं स्वीचकार ।

**"न्यवसदमरधिष्ण्ये प्राग्रवाटाभिधाने**

**गुरुमतिरभिनन्दन् देवमानन्दमूर्तिम्"** [मध्व.12.54] इति आनन्दमूर्तिं देवं विशेषणेनैव ज्ञायते श्रीजनार्दनमूर्तेः लक्षणम् ।

श्रीमध्वाचार्यः यस्यां शिलायां उपविश्य चातुर्मास्यं अकरोत् सा शिला देवालये संस्थापिता । तस्यां उपरि सर्वमूलग्रन्थं संस्थाप्य पूजयन्ति । बहवः यात्रार्थिनः अत्र आगमिष्यन्ति । [ चित्रं पृष्ठे]

## चिक्कमगळूरु

एकदा श्रीमध्वाचार्यःसञ्चरन् चिक्कमगळूरु समीपे भद्रानदीतीरं आजगाम । तत्र कळसनामकं [19] ग्रामं अस्ति । तद्ग्रामस्य बहिः भद्रानदी प्रवहति । तत्र एका बहुभारभूता बृहच्छिला आसीत् । सा शिला नद्याः प्रवाहवेगां धारयितुं समर्था आसीत् । नद्यां ये स्नान्ति तेषां स्नातॄणां जलरंहसा प्रतिरोधो न भवेत् इति भावनया जनानां स्नानपानादिकार्यार्थं तां शिलां निर्दिष्टस्थळविशेषे स्थापयितुं बहवः यतन्ति स्म । तत्र आगतवन्तं अत्याकर्षकविग्रहं श्रीमध्वाचार्यं दृष्ट्वा नतमस्काः बभूवुः । तदा आचार्यः तत्कार्यं विचारयामास । तदा जनाः ऊचुः "इमां शिलां नेतुं वयं असमर्थाः । यदि भीमः इमां शिलां पश्येत् चेत् नयेत्" इति । तदा श्रीमध्वाचार्यः लीलया करकमलेन तां शिलां स्थलविशेषे स्थापितवान् ।

**“निन्ये तां गिरिमिव वानरीकृतात्मा**

**लीलावत्करकमलेन सोऽमलेन ।**

**तत्रापि न्यधित तयाऽस्य सूच्यतेऽलम्**

**तत्तुङ्गां ननु निकषाऽधुनाऽपि कर्म ॥** [मध्व.16.9] इति कविना वर्णितम् ।

तेन हनुमदवतारस्य कार्यं स्मारयामास । इदानीमपि सा शिला तत्र वर्तते । तस्यां शिलायां **“श्रीमध्वाचार्यैः एकहस्तेन हस्तेन आनीय स्थापिता शिला”** इति लिखितमस्ति । तत्रैव श्रीमध्वाचार्यस्य रेखाचित्रमपि वर्तते । तत्रैव नूतनतीर्थमपि निर्मितम् । तस्य नाम लक्ष्मीतीर्थम् । इदं तीर्थं अम्बुतीर्थं इति जनाः व्यवहरन्ति । तत्र स्नानेन चर्मरोगनिवारणं भवति इति वर्णयन्ति । कळसग्रामे ग्रामाधीशः श्रीकळसेश्वरः । प्राचीनदेवालयः । वर्षे एकवारं अत्र अवभृतस्नानार्थं आगमिष्यति । अवभृतोत्सवः भविष्यति । लक्ष्म्याः सन्निधानयुते अस्मिन् तीर्थे स्नात्वा लक्ष्म्याः अनुग्रहं प्राप्य गमिष्यति तत्रत्यानां भावना । श्रीकळसेश्वरदेवस्य उत्सवार्थं तत्र एका वेदिका वर्तते । मध्वविजयोक्तकळसक्षेत्रस्य महिमा विविधशासनेषु सङ्गृहीतम् [20] । भीमावतारेऽपि बदरीक्षेत्रे जनानां उपकाराय अलकनन्दानद्यां सेतुरूपेण बृहच्छिलां स्थापितवान् । इदानीमपि भीमसेतुरिति वदन्ति । [ चित्रं पृष्ठे]

## मधूरुदेवालयः

श्रीमध्वाचार्यः मदनाधिपतेः ईश्वरस्य सन्निधानभूतं मधूरुक्षेत्रं जगाम । मधूरुक्षेत्रं कासरगोडुनगरस्य समीपे वर्तते । केरळराज्यस्य सुप्रसिद्धं क्षेत्रम् । सिद्धिविनायकस्य सन्निधानविशेषोऽपि वर्तते । पुराणेषु मधुपुरी इति प्रसिद्धम् । अत्र साक्षात् भार्गवः परशुरामः विनायकं प्रतिष्ठापयामास ।

तौळवभूभागं निर्माय परशुरामः तीर्थयात्रां कुर्वन् मधुपुरीं आजगाम । अत्र विघ्नेश्वरं प्रतिष्ठाप्य आलयं कारयित्वा पूजयामास । शाश्वतं घृतापूपं नैवेद्यं कल्पयामास । लक्ष्मीधर इति प्रसिद्धाय द्विजवराय क्षेत्रतन्त्रं ददौ इति पुराणे [21] क्षेत्रस्य महिमा वर्णिता ।

श्रीमध्वाचार्यः मुनियूरुग्रामे आसीत् । तत्र अम्मण्णायद्विजः मधूरुदेवालयस्य अधिकारी आसीत् । सः विशेषसेवां अकरोत् । तेन सन्तुष्टः श्रीमध्वाचार्यः श्रीमन्नारायणविग्रहं अनुग्रहरूपेण ददौ । आचार्यस्य प्रभावेण मुनियूरु "मध्वमुनिपुर" इति नाम्ना प्रसिद्धम् । इदानीं "मुनिपुर" "मुनियूरु" इत्यादिनाम्ना ख्यातम् ।

राजा जयसिंहः कबेनाडुप्रदेशस्य प्रसिद्धमधूरुदेवालयं आगन्तुं प्रार्थयामास । तस्य प्रार्थनां अङ्गीकृत्य श्रीमध्वाचार्यः मुनियूरुग्रामतः आजगाम । तदा बहवः शिष्याः आसन् । तस्मिन् काले मधूरुक्षेत्रं "मदनेश्वर" इत्येव आह्वयन्ति स्म । मदनाधिपतिः शिवः विनायकश्च तत्र प्रधानौ ।

**"मदनाधिपतेः सुधाम धाम प्रविवेशाखिललोकवन्दनीयम्"** [मध्व.13.9]

श्रीमदनन्तेश्वर इत्यर्थे एव मदनाधिपतिः इति शब्दप्रयोगः । इदानी मधूरु इति प्रसिद्धः । कासरगोडुमण्डले बहुप्रसिद्धं क्षेत्रम् ।

## उत्तरे भारते मध्ववैभवः

श्रीमध्वाचार्यः भारतस्य तीर्थेषु क्षेत्रेषु च सञ्चरन् तत्रत्य भगवन्तं अस्तौत् । तत्ववादं उपदिशन् सज्जनान् अनुजग्राह । वेदव्याख्यानं कृत्वा पञ्चभेदप्रतिपादकं द्वैतमतं स्थापयामास । आचार्यस्य अनुपममहिमां दृष्ट्वा विस्मिताः जनाः नतमस्काः बभूवुः ।

उत्तरभारते सर्वत्र श्रीमध्वाचार्यस्य अनुयायिनः अनेके बभूवुः । वैष्णवदीक्षां स्वीकृत्य सर्वे मध्वतत्वान् प्रतिपादयामासुः ।

**गङ्गावतरणम्**

**"तीर्थेषु तीर्थेषु च सौख्यतीर्थः**

**क्षेत्रेषु च क्षेत्रविदां वरिष्ठः ।**

**गोविन्दमावन्द्य सहानुगोऽगात्**

**गङ्गां पुनस्तुङ्गतरङ्गमालाम्"** [मध्व.10.26.] इति

काव्योक्तरीत्या श्रीमध्वाचार्यः बदरिकाश्रमयात्रां समाप्य गङ्गातीरं आजगाम ।

शत्रोः तुरुष्कराजस्य भयात् त्याजितसमस्तनावं गङ्गायाः तटं निजैः शिष्यैः परिवृतस्सन् आजगाम । नावैः विना अन्यैः लङ्घयितुं अशक्या नदी गङ्गा । तत्र तुरुष्कराजः सञ्जारं निषेधयामास । बलिष्ठान् भटान् तदर्थं नियोजयामास । निषेद्धॄन् पुरुषान् अपि अनादृत्य श्रीमध्वाचार्यः नदीं लीलयैव तारयामास । तदा **"वारयत वारयत, पारगमनात् प्रागेव मारयत मारयत "** [मध्व. 10.10] इति तुरुष्कभटाः प्रावोचन् । तदा आचार्यः गम्भीरया वाचा "युष्मत् क्षितिपतिं द्रष्टुं समागताः वयम् । किमर्थं कलहं कर्तुं इच्छथ" इति प्रोवाच । आचार्यः मधुरया वचसैव तान् न्यरुणत् । क्रूरकिङ्करसहस्रतयेन परिवृतोऽपि आचार्यः तुरुष्कभाषयैव राजानं

**योऽसौ देवो विश्वदीपः प्रदीप्तः**

**कुर्मः सर्वं तत्परानुग्रहेण ।**

**यामस्तावत्तूर्णमाशामुदीचीम्**

**इत्याद्यं तद्भाषया चित्रवाक्यम् ॥** [मध्व.10.17.] इत्याह ।

राजा आचार्यस्य गाम्भीर्यम्–धृतिम्–उरुवीर्यम्–आर्यभावञ्च दृष्ट्वा विस्मितस्सन् अस्मै सपदि राज्यार्धं समर्पयाम्बभूव ।

अयं प्रदेशः उत्तरप्रदेशस्य फरूकाबाद् इति प्रसिद्धः नगरः । अत्रैव गङ्गानदी विशालरूपेण प्रवहति । परमपूज्याः श्रीपेजावरश्रीपादाः अत्र अन्वेषणं कारयामासुः ।

## हृषीकेशक्षेत्रम्

श्रीमध्वाचार्यः गङ्गायाः सन्निधानोपेतं हृषीकेशं क्षेत्रं आजगाम । इदं क्षेत्रं भारतस्य अपूर्वपुण्यक्षेत्रम् । भगवतः हृषीकेशस्य देवालयः अस्ति । पद्मपुराणे अस्य क्षेत्रस्य वर्णनं वर्तते । पुराणे देवालये च भरतालयः इत्येव अस्ति ।

अत्रत्य भगवतः नाम भरत इत्येव निरूपितम् । परन्तु भरत इति रामानुजः भरतः न । किन्तु जगद्धारणात् भगवान् भरतः इति नाम्ना स्तुत्यः । जगति हृषीकेशदेवालयः केवलं अत्रैव । ब्रह्माण्डपुराणे स्कान्दपुराणे महाभारते च अस्य क्षेत्रस्य वर्णना निरूपिता । देवलोकात् आगता गङ्गा शिवस्य जटात् अत्रैव निस्सृता । देवनदी गङ्गा नाम नाम प्राप्तवती ।

श्रीमध्वाचार्यः अत्रत्य भगवन्तं नत्वा सभायां आसीनः अभवत् । तदा एकः वृद्धः आगत्य भिक्षार्थं आगन्तुं प्रार्थयामास ।

**"विप्रात्मेशः क्षणार्धं कृतनतिरसितिश्रीहृषीकेशदेशे**

**स्पष्टं दृष्टोऽप्यदृष्टः सपदि विहितवान् विस्मयं देहभाजाम् ।**

**स्वप्ने स्वप्रेरितान्यस्थलगनिजनरोपाहृतैः भक्ष्यभोज्यैः**

**प्राज्यैः प्राभोजयत् स्वं गुरुमखिलगुरुं वेदयन् वेदबन्धुम्** [मध्व.10.50]

इति स्वप्ने ईश्वरः भक्ताय मध्वाय भिक्षां प्रदातुं आदिदेश । शिष्याः गुरुं पप्रच्छुः । तदा श्रीमध्वाचार्यः शिवः आगत्य भक्षार्थं आहूतवान् इति उवाच ।

ईश्वराज्ञया धनिकः भक्तः वैविध्यपूर्णां भिक्षां प्रादात् [22] भक्तेन प्रदत्तां भिक्षां स्वीकृत्य श्रीमध्वाचार्यः विरराज ।

## बदरीक्षेत्रम्

श्रीमध्वाचार्यः परमवैष्णवक्षेत्रं बदरीं गन्तुं मतिं चक्रे । श्रीअनन्तेश्वरस्य सन्निधौ प्रार्थयामास । "रिक्तहस्तेन नोपेयात् राजानं देवतां गुरुम्" इति स्मृतिवचनम् । अतःभगवतः नारायणाय उपायनं दातुं गीताभाष्यं चकार । श्रीअनन्तेश्वरं प्रणम्य अनुज्ञां स्वीकृत्य उत्तरां दिशं प्रययौ । मार्गे हरिद्वारतः बदरीपर्यन्तं जगत्रयचित्रं कर्म कुर्वन् जगाम । हिमाच्छादितं बदरीक्षेत्रं आजगाम । नर–नारायणयोः दिव्यक्षेत्रम् । देवभूमिरित्येव प्रख्यातम् । तत्र नारायणं नत्वा गीताभाष्यं उपायनं आर्पयत् । नारायणस्य प्रीतये तस्य पुरतः गीताभाष्यस्य प्रवचनं अकरोत् । ग्रन्थरचना रजतपीठपुरे अभवत् । प्रवचनं बदर्यां समजनि । ग्रन्थस्य मङ्गळाचरणे –

**"देवं नारायणं नत्वा सर्वदोषविवर्जितम् ।**

**परिपूर्णं गुरूंश्चान् गीतार्थं वक्ष्यामि शक्तितः"** इति उक्त्वा वाचनं अकरोत् ।

तदा साक्षात् नारायणः "अतिसूक्ष्ममपि एतदर्थं वक्तुं भवान् समर्थ एव । तथापि नोक्तवान् असि । अतः "शक्तितः" इति पदं हित्वा "लेशतः" इति पदं योजयतु" इति उवाच । एवं भगवान् वायोः अवतारभूतस्य श्रीमध्वाचार्यस्य अगाधधीशक्तिं सूचयामास [23] । रात्रिकालः समायातः । प्रवचनकार्यक्रमस्तु समाप्तः । गीतार्थश्रवणेन धन्यतां अनुभूताः शिष्याः निद्रां अकुर्वन् । श्रीमध्वाचार्योऽपि निद्रां चकार । तथापि भगवान् "उच्यताम्" इति पुनः सपृथिव्यास्फालनं कृत्वा गीताप्रवचनाय आदिदेश ।

शिष्याः अपि शब्दं श्रुत्वा आश्चर्यचकिताः बभूवुः । पुनः शिष्याः उत्थिताः । प्रवचनकार्यक्रमः देवसन्निधाने अभवत् ।

बदर्यां देवगङ्गा अलकनन्दा प्रवहति । हिमाच्छादितां तां गङ्गां स्पर्शनं कर्तुमपि क्लेशः । अत एव जनाः हिमभीताः न स्पर्शनं कुर्वन्ति । तत्र स्नातुं उष्णकुण्डः वर्तते । तस्मिन्नेव उष्णजले मनुजाः स्नान्ति । सूर्योदयात् अनन्तरमेव जनाः बहिः आगमिष्यन्ति । श्रीमध्वाचार्यस्तु अरुणोदयकाले एव [24] तस्यां अलकनन्दायां स्नानं व्यधित । तं दृष्ट्वा भक्ताः "अंश एष पृशतामधिपस्य" [मध्व.6.43] इति ऊचुः । श्रीमध्वाचार्यस्य वासः अनन्तमठे आसीत्[25] ।

तदा आचार्यः भगवतः विशेषतोषार्थं काष्ठमौनव्रतं [26] चकार । अष्टचत्वारिंशत् दिनानि यावत् मौनव्रतं स्वीचकार ।

एकदा भगवान् वेदव्यासः रात्रौ आगत्य स्वकीयाशमं आगन्तुं प्रेरयामास । उत्तरबदर्यां वेदव्यासाश्रमः । तत्र जनानां सञ्चारः नास्ति । गन्तुमपि न शक्यते । सूर्योदिते सति करुणावान् आचार्यः गन्तुं मतिं व्यधात् । मौनवानपि शिष्येभ्यः यद् वक्तव्यमासीत् तत् पत्रे अलिखत् ।

**"नेदृशं स्थलमलं शमलघ्नम्**
**नास्य तीर्थसलिलस्य समं वाः ।**
**नास्ति विष्णुसदृशं ननु दैवं**
**नास्मदुक्तिसदृशं हितरूपम्"** [मध्व.6.47]
**आव्रजेत् इह न वा इति स हि वेद**
**स्वस्ति वोऽस्तु"** [मध्व.6.48] इति अलिखत् ।

अनेन श्लोकेन बदरीक्षेत्रस्य भारतदेशस्य च महिमा प्रतिपादिता । एवं विलिख्य उत्तरबदरीं जगाम ।

आचार्यशिष्येषु अन्यतमः श्रीसत्यतीर्थयतिः[26] एनं पत्रं पठित्वा गुरोः विरहं सोढुं असमर्थः सन् अन्वगमत् । बहुदूरे गच्छन्तं आचार्यं ददर्श । सायं समयः अभवत् । पर्वतशिखरेषु वायुदेव इव [27] भासयन्तम् गुरुं दृष्ट्वा भावपरवशः समभवत् । करुणासागरः आचार्यः श्रीसत्यतीर्थयतिं हस्यचेष्टया निर्गन्तुं प्रेरयामास । मठं प्रत्यागतः श्रीसत्यतीर्थः गुरोः महिमां अकथयत् ।

भारतस्य अत्युन्नतपर्वतप्रदेशे हिमालये बदरी वर्तते । साक्षात् नरनारायणौ अत्र तपः कुरुतः । नद्याः अलकनन्दायाः उभयतः पर्वतौ विद्येते । पर्वतरूपेण तौ तपः आचरतः [28] । ऊर्वशीकुबेरनारदादयः तयोः सेवां कुर्वन्ति ।

बदरीक्षेत्रतः अनतिदूरे विद्यते माना इति ग्रामः । भारतस्य अन्तिमः ग्रामः । तत्र गुप्तगामिनी सरस्वती नदी प्रवहति । ततः एव स्वर्गारोहणमार्गः । पाण्डवाः इमां नदीं तर्तुं न शक्नुवन् । तदा भीमसेनः सेतुरूपेण बृहच्छिलां तत्र स्थापितवान् । तां शिलां "भीमशिला" इति निर्दिशन्ति । इदानीमपि द्रष्टुं शक्यते ।

तस्मिन्नेव रमणीयपरिसरे भगवतः वेदव्यासस्य गणेशस्य च मन्दिरं [व्यासगुहा–गणेशगुहा] वर्तते । "शम्याप्रास" इति [29] नाम अस्य प्रदेशस्य । महाभारतस्य रचना तत्रैव अभूत् ।

**"प्राप स नारायणतः शुद्धशिलात्मप्रतिमाः ।**
**यासु स पद्मासहितो दोष्यहितः सन्निहितः"** [मध्व.10.24] इति
काव्योक्तरीत्या भगवान् श्रीवेदव्यासः श्रीमध्वाचार्याय अष्टौ शिलाः ददौ ।

**"इष्ट्या व्यासाश्रमं गच्छन् मुख्यप्रेष्यो यतो मरुत् ।**
**प्रणिपत्य महान् मध्वो व्यासं निजगुरुं परम् ॥**

**विज्ञापयामास भुवौ स्वव्यापृतसुदुष्करम् ।**

**निशम्य तस्य वाक्यानि व्यासः सर्वान्तरात्मकः ॥**

**स्वादिष्ठानान् परं चाष्टौ ग्रावाणः कृपया ददौ"** इति वायुपुराणेऽपि वर्णितम् ।

तासु भगवत्सन्निधानं विशेषरूपेण विद्यते । भगवान् वेदव्यासः महाभारततात्पर्यनिर्णयं रचयितुं आदिदेश । श्रीवादिराजतीर्थश्रीपादाः तीर्थप्रबन्धे नारायणं अस्तौत् । [30] [ चित्रं पृष्ठे]

## कुरुक्षेत्रम्

श्रीमध्वाचार्यः कुरुक्षेत्रं शिष्यैः सह आजगाम । भरतखण्डस्य महाक्षेत्रेषु कुरुक्षेत्रं एकम् । देहलितः हरिद्वारतोऽपि गन्तुं मार्गः वर्तते । स्नानकाले प्रतिदिनं स्मर्यमाणं पवित्रक्षेत्रम् [31] । इदं क्षेत्रं पुराणेषु बहुवर्णितम् । पूर्वं पुरुवंशस्य राजा कुरुः अत्र सरस्वतीतीरे भूमिं संशोध्य श्रीविष्णुचक्रेण स्वदेहं छित्वा बीजवत् देहं भुवौ उवाप । तेन "कुरुक्षेत्रम्" नाम इति वामनपुराणे निरूपितम् । कौरवपाण्डवानां युद्धभूमिः इदम् । अत्रैव श्रीकृष्णः भगवद्गीतां उपदिदेश । भगवान् परशुरामः दुष्टक्षत्रियान् निहत्य "स्यमन्तकपञ्चकम्" नाम तीर्थं निर्मिमे । महाभारतयुद्धानन्तरं श्रीकृष्णः द्वादशवर्षं यावत् यज्ञमेकं चकार [32] । एकदा सूर्यग्रहणकालः । श्रीकृष्णः तीर्थस्नानार्थं अत्र आजगाम [33] । अस्मिन् क्षेत्रे काम्यकवनं–अदितिवनं–व्यासवनं–फलकीवनं–सूर्यवनं–मधुवनं–शीतवनम् इति सप्त वनानि सन्ति । तथैव सरस्वती–वैतरणी–आपगा–मधुस्रवा–कौशिकी–दृषद्वती–हिरण्वती इति सप्त नद्यः आसन् इति वामनपुराणे उल्लिखितम् [34] । अपि च ओघवती नदी अपि आसीत् । अत्रैव भीष्माचार्यः शरमञ्चे शयानः [35] । अस्य क्षेत्रस्य पांसवोपि पापापहारकाः ।

श्रीकृष्णस्य पादस्पर्शेन गीतामृतवर्षणेन च पाविताः पांसवः यात्रिकानां देहशुद्धिं कुर्वन्ति [36] । क्षेत्रस्यास्य महिमा अतुला अनुपमा च ।

**कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।**

**य एवं सततम् ब्रूयात् सर्वपापैः प्रमुच्यते ॥** इति महाभारते वर्णितम् ।

एतस्मिन् क्षेत्रे श्रीमध्वाचार्यः शिष्यैः सह अत्र आगत्य क्षेत्रस्य महिमां अवोचत् । स्वद्वितीयावतारस्य भीमस्य महिमां "भीमसेनसमो नास्ति" इति वचनात् भीमपराक्रमस्य च महिमां वर्णयामास ।

तदा श्रीसत्यतीर्थः "भीमावतारस्य गदां द्रष्टुं इच्छामः" इत्यवोचत् । तदा श्रीमध्वाचार्यः प्रदेशविशेषे भूखननं कर्तुं आदिदेश । ते तथा अकुर्वन् । तत्र भृहद्गदां दृष्ट्वा हर्षचकिताः बभूवुः । तथैव श्रीसत्यतीर्थोऽपि महाभारतयुद्धे आसीत् [37] इति तस्य गदां प्रदर्ष्य जगाद ।

**"प्राज्ञो राज्ञां त्रिदिवपदवीं कौरवं क्षेत्रमाप्तः**

**सस्माराथ स्वविहृतिपतद्धस्तियुद्धोत्सवानाम् ।**

**सत्यात्माद्यैः इह परिवृतो भाविमारीचदृग्भिः**

**विस्मेरैः स्वैर्निजनृपतनूहेतिदृष्ट्याऽतितुष्टे ॥** [मध्व.10.49.] श्रीमध्वाचार्यः अस्मिन् क्षेत्रे स्वावतारस्य भीमस्य चेष्टां सस्मार ।

## गोमतीनदी

गोमतीनदी द्वारकाक्षेत्रे वर्तते । सप्तमहाक्षेत्रेषु द्वारकाक्षेत्रं एकम् ।

**"अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।**

**पुरी द्वारावती चैव सप्तैते मोक्षदायिकाः"** इति भारतदेशस्य सप्तमहाक्षेत्राणि ।

कृतयुगे कुशस्थली इति प्रख्यातम् इदं क्षेत्रं भगवतः श्रीकृष्णस्य सन्निधानात् द्वारका इति नाम्ना प्रसिद्धमभूत् । द्वापरे श्रीकृष्णः अत्र सुवर्णभवनं निर्मिमे । अवतारपरिसमाप्त्यनन्तरं इदं भवनं समुद्रे आप्लावयत् इति कथा वर्तते [38] । अत्रैव प्रवहति गोमतीनदी । भारतस्य महानदीषु एका । भगवतः श्रीकृष्णस्य पादसम्सर्गभूताः पांसवः अत्यन्तपवित्रतमाः सन्ति । गोपीचन्दनमिति भावयन्ति । वैष्णवाः देहेषु धारयन्ति । गोपीचन्दनधारणेन देहशुद्धिः भवति ।

**“ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा ।**

**अथवा स्नानमात्रेण गोमत्याम् कृष्णसन्निधौ”** इति ब्रह्माण्डपुराणस्य वचनं

गीताभाष्ये उदाहृतम् । गोमत्यां सदा श्रीकृष्णस्य सन्निधिः [39] । गोमती द्वारकायां समुद्रम् गच्छति । गोमतीघाट् इति एनम् सङ्गमप्रदेशं व्यवहरन्ति ।

एकदा श्रीमध्वाचार्यः सञ्चारक्रमेण गोमतीतीरं आजगाम । तत्र शूद्रराजः शासनं करोति स्म । स तु महान् वेदद्वेषी । सर्वेषां पुरतः वेदप्रामाण्यस्य विषये चर्चां करोति स्म । तत्र कारणन्तु **“या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्”** [ऋग्वेदे/10/97/1] इति मन्त्रं पठनमात्रात् बीजाङ्कुरफलं ददाति इति मन्त्रस्य फलितार्थः । परन्तु पठनेन फलं न दृश्यते । अतः वेदः अप्रमाणम् इति तस्य वादः [40] । सर्वेऽपि प्रामाण्यसमर्थने असमर्थाः आसन् ।

**“गोमत्यास्तटनिकटेऽच्छकीर्तिचन्द्रम्**

**विश्वज्ञं क्षितिपतिरन्त्यवर्णजन्मा ।**

**विद्वेष्टा श्रुतिगुणसाधकम् श्रूतीनाम्**

**वाचालो वचनमुवाच वाग्मिवर्यम्** [मध्व.16.2] इति कविः निर्दिशति ।

सः राजा श्रीमध्वाचार्यं अपृच्छत् । अनर्हाय सर्वदा वेदाः फलानि न यच्छन्ति । त्वन्तु वेदानधिकारी । कथं वा फलप्राप्तिः । बीजं स्वीकृत्य मन्त्रं पपाठ । झटिति मन्त्रप्रभावेण अङ्कुरोत्पत्तिः ततः पुष्पफलानि विकसितानि ।

**"आक्षेपं तमसहमान उच्चमानः**

**सद्योऽसौ निजकरपल्लवद्वयेन ।**

**आदाय व्यतनुत बीजमोषधीनाम्**

**सूक्तेनाङ्कुरदलपुष्पबीजसृष्टिम्"** [मध्व.16.5] इति मन्त्रस्य महत्वं प्रतिपादयत् ।

तत्रस्था सर्वे आश्चर्यचकिताः । राजा निरुत्तरः अभवत् । एवं वेदप्रामाण्यम् प्रत्यक्षरूपेण समर्थयामास ।

द्वारकायां श्रीमध्वाचार्यस्य शिष्याः बहवः आसन् । ते सर्वे वैष्णवदीक्षां स्वीचक्रुः । श्रीवादिराजश्रीपादोऽपि बहुकालं अत्र तपश्चक्रे । तस्मिन् काले श्रीकृष्णतीर्थ इति यतिः आसीत् । तस्य यतेः ज्वरबाधा अतीव आसीत् । तदा श्रीवादिराजतीर्थश्रीपादः "श्रीमध्वमुनिप्रतापाष्टकं" उपदिश्य ज्वरबाधां निवर्तयामास इति कथा श्रूयते । एवं वैष्णवप्रभावः वर्तते ।

## हस्तिनपुरी

हस्तिनपुरी देहली–हरिद्वारमहामार्गे मीरट् नगरस्य दक्षिणपार्श्वे वर्तते । पाण्डवानां निवासभूमिः आसीत् । अत्रैव भीमसेनः पराक्रमवैभवं प्रकटीचकार । हस्ती इति कुरुवंशस्य राजा । तेन निर्मितत्वात् हस्तिनापुरम् इति नाम अभवत् [41] । गङ्गायाः तीरे विराजमानं एनम् नगरम् पाण्डवाः षट्त्रिंशद्वर्षाणि शशासुः । अश्वमेधयागस्य पवित्रभूमिः अपि इयम् । इदानीमपि तत्र कर्णस्य सन्ध्यावन्दनप्रदेशः– विदुरगृहम्–लाक्षागृहम् इत्यादीनि स्मारकाणि सन्ति ।

लक्षणास्वयम्वरात् साम्बम् मोचयितुं बलरामः हलायुधेन हस्तिनापुरं आकर्षयामास । तदा इदम् नगरं गङ्गायां अपतत् ।

पुनः यथास्थानं प्राप्तं

**“अद्यापि च परं ह्येतत् सूचयन् रामविक्रमम्** ।

**समुन्नतं दक्षिणतो गङ्गामनु च दृश्यते”** इति भागवते सूचितम् ।

श्रीमध्वाचार्यः गङ्गातरणं कृत्वा हस्तिनापुरीं आजगाम ।

**“प्राप्तस्ततो हस्तिनराजधानीं**

**मासानुवासेह स वासयोग्यान् ।**

**मठान्तरेऽनन्तगुणान्तरः सन्**

**एकान्तदेशे सरितोऽसमीपे”** ॥ मध्व.10.34॥ इति कविः हस्तिनापुरस्य सञ्चारं निरूपयति । श्रीमध्वाचार्यः गङ्गानद्याः दूरे स्थिते एकस्मिन् मठे चातुर्मास्यव्रतं स्वीचकार । तस्मिन् काले श्रीमध्वाचार्यं सेवितुं देवनदी गङ्गा भूमिं भित्वा आजगाम । आचार्यं नत्वा निर्जगाम । गङ्गायाः दिव्यस्वरूपं दृष्ट्वा शिष्याः आनन्दतुन्दिलाः अभवन् ।

**“गुरुप्रबर्हस्य पदारविन्दं विदूरतः सा प्रणनाम मूर्ता ।**

**औदार्यसौन्दर्यतनुं तनुं ताम् आलक्ष्य शिष्यैरतिविस्मितं तैः”** [मध्व.10.36] इति काव्ये वर्णितम् । शिवादिवन्द्या देवनदी आचार्यस्य महत्वं सूचितवती ।

अयं फलितार्थः – श्रीमध्वाचार्यः स्वभीमावतारे सम्पर्कभूतस्य क्षेत्रस्य परिचयं चकार । अपिच पूर्वजन्मनः स्मरणं स्पष्टमासीत् । तेन श्रीमध्वाचार्यः वायोः अवतारः इति स्फुटं ज्ञायते ।

## काशीक्षेत्रम्

हस्तिनापुरे चातुर्मास्यव्रतम् समाप्य श्रीमध्वाचार्यः काशीक्षेत्रं आजगाम ।

**"तेनोपयातेन कदाचनाथ**

**वाराणसीं पापनिवारणेन ।**

**अवादि वाणी बलिनः स्वशिष्यान्**

**विलोक्य लीलावसरेऽवलिप्तान्"** [मध्व.10.37] इति श्रीमध्वाचार्यः

गर्विष्ठान् स्वशिष्यान् योद्धुं आह्वयामास । सर्वे युगपत् अस्योपरि निपतिताः । परन्तु मध्वशरीरबलात् योद्धुं असमर्थाः श्रान्ताः ते सर्वे प्रार्थयामासुः –

**"सौमेरवं गौरवमावहन्ति**

**तवाङ्गमङ्गगुलयश्च नोऽङ्गे ।**

**पुरा विनश्याम इतो दयालो**

**स्वामिन् विमुञ्चेत्यवदंस्तदा ते"** [मध्व.10.40] इति ।

एवं शिष्याः श्रीमध्वाचार्यस्य दैहिकसामर्थ्यं दृष्ट्वा साश्चर्यम् प्रणेमुः । एवमेव इन्द्रपुरी एकः विद्वान् आसीत् । स तु श्रीमध्वाचार्यं परीक्षितुं अकामयत् ।

**"सदाक्ष्यमाक्षिप्तसमस्तपक्षको**

**यतिः प्रभुं कोऽप्यमरावतीपदः ।**

**जिगीषया ज्ञानसहायकर्मणः**

**प्रसाध्यतां साधनतेत्युदाहरत्"** [मध्व.10.42] इति इन्द्रपुरी वादं कर्तुं आरभत ।

वेदादिप्रमाणैः वाक्यैः तस्य वादम् खण्डयन् सभायां विरेजे ।

भारतदेशस्य सप्तमोक्षदायकक्षेत्रेषु ["अयोध्या–मथुरा–माया–काशी–काञ्ची–अवन्तिका–पुरी–द्वारावती"] काशीक्षेत्रं एकतमम् ।

वेदेष्वपि वर्णितक्षेत्रमिदम् [42] । जगतः अत्यन्तप्राचीननगरम् इति अस्य नगरस्य वैशिष्ट्यम् [43]। वारणा –असिनद्योः मध्यभागः "वारणासी" इति प्रसिद्धम् । अस्य क्षेत्रस्य स्मरणम् अन्त्यकाले विशेषफलप्रदम् [44] इति पुराणेषु निरूपितम् । अत्र गङ्गा उत्तरवाहिनी प्रवहति । पञ्चगङ्गाघाट् तुळसीघाट् इति पवित्रप्रदेशः सुप्रसिद्धः । पञ्चगङ्गाघाट् प्रदेशे गङ्गा–यमुना–सरस्वती–किरणा–धूतपाय इति पञ्च नदीनां सङ्गमः भवति ।

अस्मिन्नेव तटे संस्कृतविद्वान् पण्डितराजः जगन्नाथः गङ्गालहरीकाव्यं चकार । श्रीबिन्दुमाधवस्य देवालयोऽपि अत्रैव विराजते । तुळसीघाट् इति प्रदेशे गोस्वामी श्रीतुळसीदासः श्रीरामचरितमानसं ग्रन्थं रचयामास ।

पूर्वं भीमसेनः अत्र काळीनाम्नी कन्यां उवाह । सा तु काशीराजस्य पुत्री । तस्याः स्वयंवरकार्यक्रमः अत्रैव आसीत् । भीमसेनः आगत्य तां स्वीचकार । एवं भीमसेनस्य वैवाहिकसम्पर्कप्रदेशः । एवमेव भीमसेनः अत्रैव गङ्गाविरोधिनं जरासन्धं नद्यां पातयामास । एवं इतिहासे सुप्रसिद्धं महाक्षेत्रम् ।

अयं फलितार्थः । काशी वस्तुतः स्मशानप्रदेशः । इदानीमपि काश्यामेव दहनं अस्तिविसर्जनञ्च कुर्वन्ति ।

**"यावद्वर्षसहस्राणि गङ्गातोयेषु तिष्ठति ।**

**तावद्वर्षसहस्राणि ब्रह्मलोके महीयते"** इति पुराणवचनानुसारं अत्र

अस्थिविसर्जनं कुर्वन्ति । स्मशानस्य भस्मनैव प्रतिदिनं भस्माभिषेकः भवति । साक्षान्मनोनियामकस्य शिवस्य साधना भूमिः । भीमस्य कल्याणभूमिश्च । अत एव साधकानां पवित्रभूमिः कल्याणभूमिश्च । काशी विदुषां भूमिः इत्यपि प्रसिद्धा । संस्कृतक्षेत्रे बहूनां विदुषां जीवनकथायां काशीस्मरणं भवत्येव । अतः काश्यां सर्वमपि शिवम् मङ्गलम् ।

केचन अज्ञानिनः काश्यां गङ्गास्नानं –भस्मधारणं न कुर्वन्ति । शवस्पर्शकारणात् । परन्तु शिवसम्पर्कात् सर्वमपि मङ्गलम् । अधारणे वयमेव अमङ्गलाः भवेम ।

श्रीमध्वाचार्यः एव पूर्वं भीमसेनः । वायोः द्वितीयावतारः भीमावतारः । तृतीयावतारः मध्वावतारः । अत एव श्रीमध्वाचार्यः स्वभीमावतारस्य कार्यसाधनानि प्रादर्शयत् । तेन तत्काले एव स्वभक्तानां कृते स्वावतारं स्वावतारस्य महिमाञ्च दर्शयामास ।

## गोदावरी

**"सानुगो विविधभूरतीत्य गोदावरीतटमगाधलेशधीः"** [मध्व.9.14] इति काव्योक्तरीत्या श्रीमध्वाचार्यः बदरीयात्रां समाप्य गोदावरीं आजगाम । मध्यभारतस्य प्रमुखानदी गोदावरी ।

**"गङ्गे च यमुने चैव गोदावरि सरस्वती ।**

**नर्मदे सिन्धु कावेरी जलेऽस्मिन् सन्निधिं कुरु"** इति भरतखण्डस्य

सप्तमहानदीषु गोदावरी तृतीयस्थानं भजते । गौतमी इति अस्याः नामान्तरम् । प्रतिदिवसस्य सन्ध्यादिमहासङ्कल्पे **"गोदावर्याः दक्षिणे तीरे"** अनुवर्तते अस्याः महिमा । गुरुः यदा सिंहराशिं प्रविशति तदा आवर्षं यावत् अस्यां गङ्गासन्निधानम् [45] ।

**"गोदावर्यां महानद्यां वीरनारायणो नृप । शङ्खचक्रगदापद्मैः शोभितो ध्येय एव च"** इति ब्रह्माण्डपुराणाधारेण भगवत्सन्निधानं ज्ञायते । महाराष्ट्रस्य त्र्यम्बकेश्वरे जन्म प्राप्य तेलङ्गाणमार्गेण प्रवहन् बङ्गाळे समुद्रं गच्छति । तेलङ्गाणस्य राजमेण्ड्रि महानगरे एषा नदी प्रवहति । श्रीत्रिविक्रमार्यः तत्वप्रदीपायां अस्याः पौराणिकीं कथां सङ्गृह्य अदात् ।

एकदा गौतमस्य महामुनेः फलभरिते आश्रमे प्रवृत्ता एका कथा । अनावृष्टिबाधिताः मुनयः गौतमाश्रमं आजग्मुः । तत्र कतिपयदिनानि पाठप्रवचनादिना कालं यापयामासुः । स्वाश्रमं गन्तुं व्यचिन्तयन् । तदा गणेशः वटुरूपं धृत्वा "परान्नेन तपोहानिः सम्भवति । अतः स्वाश्रमं गन्तुं सूचयति । उपायमपि सूचयति । तथैव ते कार्यं चक्रुः । मायया गामेकां चक्रे । सा गौः सस्यसम्पन्ने प्रदेशे आजगाम ।

तदा गौतममुनिः गां दृष्ट्वा जलसम्प्रोक्षणं अकरोत् । तेन गौः मृता । मुनीनां प्रार्थनया गौतममुनिः शिवजटास्थितां देवगङ्गां भुवौ अवरोहणार्थं तपः तेपे । गङ्गा आगता । गङ्गासम्पर्केण गौः उदतिष्ठत् । अत एव **"गोदात्तं वारि गोदावरी"** इति नाम अभवत् । स्नानकाले च **"वृद्धगङ्गे महापुण्ये गौतमस्याघनाशिनि ।**

**गृहाणार्घ्यं मया दत्तं गोदावरि नमोऽस्तु ते"** इति प्रार्थना [46] ।

मुनीनां कार्येण खिन्नः गौतमः मुनीन् शशाप । तेन ज्ञाननाशः अभवत् । पुनः देवानां प्रार्थनया भगवता वेदव्यासेन अत्रैव ज्ञानमयप्रदीपः प्रज्वालितः ।

अस्मिन् गोदावरीतीरे महती विद्वत्सभा आयोजिता आसीत् । श्रीमध्वाचार्यः तस्यां सभायां आगतान् परीक्षकान् पण्डितान् अखण्डयत् । तथैव भाट्ट–प्राभाकर–वैशेषिक–नैयायिक–बौद्ध–चार्वाकसमयान् निराकरोत् । त्रयीसकलपक्षशिक्षकः वरिष्ठसंमतः शोभनभट्टः तत्र संसदि आसीत् ।

**"यस्तु तार्किकशिखामणिः**

**सुधीः वर्तमानसमयान् निराकरोत् ।**

**वेदभारतपुराणनिष्ठितो**

**भाष्यमेतदश्रुणोत् स मध्वतः"** [मध्व.9.18] इत्ययं श्लोकः शोभनभट्टस्य परिचयं कारयति ।

गोदावरीतीरे शोभनभट्टः शिष्यो भूत्वा अद्भुतमिदं ब्रह्मसूत्रभाष्यं मध्वमुखारविन्दात् अश्रुणोत् । तत्र तत्र सभासु सः शोभनभट्टः मध्वोक्तयुक्तिभिः प्रवचनं करोति स्म । एषः एव श्रीमध्वाचार्यस्य द्वितीयः शिष्यः । कर्नाटकस्य सज्जनगुरुःश्रीपद्मनाभतीर्थ [47] इति नाम्ना प्रसिद्धो बभूव । परमसात्विकः श्रीपद्मनाभतीर्थः श्रीमध्वाचार्याणां परमानुग्रहं अलभत् ।

**"श्रुत्या मत्या सदा भक्त्या विरक्त्या नित्यसेवया ।**

**अस्मै प्रसन्नः प्राग्जेष्ठः सद्यो विद्यां ददौ शुभाम्"** [मध्व.15.121] इति

वचनात् अस्मै प्रसन्नस्सन् श्रीमध्वाचार्यः परमात्मतत्वं ददौ । अस्मै श्रीरघुवंशशेखरं श्रीरामम् [48] अदात् । अयं श्रीपद्मनाभतीर्थः मध्वप्रणेतस्य अनुव्याख्यानग्रन्थस्य सन्न्यायरत्नावलीनाम्नीं अनर्घ्यां टीकां चकार [49] । श्रीपद्मनाभतीर्थः श्रीमदुत्तरादिमठस्य मूलपुरुषः[50] । महामहिमः श्रीपद्मनाभतीर्थः गुरोः श्रीमध्वाचार्यस्यादेशानुसारम् श्रीनरहरितीर्थाय–श्रीमाधवतीर्थाय–श्रीअक्ष्योभ्यतीर्थाय सम्स्थानं अदात् । ते सर्वे गुरोराज्ञया संस्थानं उत्तमरीत्या निर्वहन् तत्त्वप्रचारं चक्रुः ।

अयं फलितार्थः । गङ्गा गवां जीवदानेनैव गोदावरीति ख्याता । सर्वापराधं प्रक्षालयितुं समर्था गोदावरी । उपकृताः मुनयः केवलं स्वार्थं चिन्तयन् ऋषेः गौतमस्य महापराधं चक्रुः । तेन तेषां ज्ञानं तिरोहितम् । गोदावरीसन्दर्शनेन अस्माकं चिन्तनं परिवर्तितं भवेत् । वयमपि स्वार्थपराः गुरुद्रोहादिकं कृत्वा तिरोहितज्ञानवन्तः । तत्वज्ञानार्थं गुरुसेवां निस्वार्थचिन्तनं कृत्वा सुखिनो भवाम ।

## गोवा

श्रीमध्वाचार्यः गोदावरीं नदीं तीर्त्वा गोवां आजगाम । भगवतः परशुरामस्य नित्यसन्निधिभूतः पशुपे इति प्रदेशविशेषः । पशुपे इत्यपभ्रष्टभाषा । इदानीं गोवाप्रान्ते पैङ्गीण इति प्रथितः प्रदेशः । अत्रैव भगवान् परशुरामः परश्वायुधं बाणवत् प्रयुज्य समुद्रं दूरीचकार । तादृशमहिमासम्पन्नं भगवन्तं अस्तौत् । अत्र सुन्दरदेवालयः विराजते । गोमान्तकप्रदेशे कस्मिश्चित् स्थळविशेषे वासं चकार । तत्र कश्चित् भक्तः राजकेलीनामकं कदलीफलसहस्रकम् अदात् । भक्तानुकम्पी श्रीमध्वाचार्यः तानि फलानि अनायासेन जघास । सर्वे साश्चर्यं अपश्यन् ।

तद्द्राज्यस्य भूपतिः अस्मिन्नेव राज्ये स्थातुं प्रार्थितवान् । परन्तु स राजा असज्जनः आसीत् । अत एव श्रीमध्वाचार्यः तस्य विज्ञापनं निराकरोत् । तेन कुपितः सः गृहबन्धनं आज्ञापितवान् । सर्वशक्तः श्रीमध्वाचार्यः योगमायया सर्वान् शिष्यान् स्थळान्तरं प्रापयामास । कतिपयदिनानन्तरं तत्र राजा आजगाम । तत्र आचार्यः एक एव आसीत् । आश्चर्यचकितः बभूव । ज्ञानोदयः अभवत् । अपराधं क्षन्तुं ययाचे ।

केचन भक्ताः वृक्षसंरक्षणाय प्रार्थयामासुः । फलपुष्परहिताः वृक्षाः एव आसन् । अत एव प्रार्थनाञ्चक्रुः । तदा श्रीमध्वाचार्यः अनुपमगानसम्पदा फलपुष्पभरितान् अकरोत् । अपि च करुणया सुदुर्लभं गानशास्त्रं कृत्वा [51] प्रायच्छत् । परन्तु इदानीं सः ग्रन्थः नोपलभ्यते । श्रीमध्वाचार्यः यत्र उवास तं प्रदेशं “मठग्राम” इति जनाः आह्वयन्ति स्म । परन्तु दौर्भाग्यवशात् विदेशीयानां प्रभावेण च स एव मठग्रामः इदानीं “मडगाव्” अभवत् । मठः अपि नास्ति ।

अयं फलितार्थः । गोवा इति शब्दश्रवणमात्रेण भोगभूमेः स्मरणं भवति । वयमपि केवलं समुद्रस्य दर्शनार्थं तत्र गच्छामः ।

परन्तु गोवामण्डले प्राचीनाः देवालयाः मठाश्च सन्ति । गोवामण्डले अन्यमतीयानां शासनेन अस्मत्पूर्वजानां स्मारकाणि नष्टानि । प्राचीनहस्तप्रतयः ग्रन्थाः अपि नोपलभ्यन्ते । केचन सात्विकेतिहासज्ञाः पूर्वजानां इतिहासान्वेषणं चक्रुः । परन्तु एतावत्पर्यन्तं फलं न लब्धम् । इतोऽपि साङ्घिकप्रयत्नं कुर्वन्ति चेत् अपूर्वविचाराणां प्राप्तिः निश्चयेन भवति ।

## तिरुवनन्तपुरम्

केरळराज्यस्य प्रमुखक्षेत्रं तिरुवनन्तपुरम् । पुराणेषु “अनन्तवनम्” इति अस्य नाम । अस्मिन् क्षेत्रे भगवान् श्रीमदनन्तः शेषशायी अस्ति । जगति एतादृशबृहद्विग्रः नास्ति । नाभौ विराजमाने कमले ब्रह्मा चकास्ति । भगवान् स्वदक्षिणहस्तं शिवलिङ्गे स्थापितवान् । अत एव इदं क्षेत्रं अनन्तशयनम् इत्यपि कथयन्ति । देवस्थानस्य चतुर्षु दिक्षु द्वाराणि सन्ति । देवस्थानस्य पुरतः मत्स्यतीर्थं अस्ति । महाभारते ब्रह्माण्डपुराणे च वर्णितम् । दिवाकर इति मुनिः तपसा भगवन्तं आराधयामास । तेन सन्तुष्टः भगवान् दर्शनं अदात् । तेन संप्रार्थितः अत्रैव स्थिरोऽभवत् ।

कालान्तरे भक्ताः द्वादशसहस्रशालिग्रामशिलाः संस्थाप्य देवालयं चक्रुः । इदानीं गर्भगृहे कटुशर्करामिश्रणेन निर्मितमूर्तिः विराजते ।

अत्र राजानः अपि अनन्तदासाः भवन्ति । भगवतः दर्शनन्तु वैशिष्ट्यपूर्णम् । द्वारत्रये दर्शनम् । प्रथमद्वारे पादभागस्य दर्शनम् । द्वितीयद्वारे उदरभागस्य दर्शनम् । तृतीयद्वारे मुखदर्शनम् [52] । श्रीमध्वाचार्यः तिरुवनन्तपुरं आजगाम ।

**ततः क्रमेण प्रचलन्नुपेयिवान्**

**अवन्दतेन्दीवरसुन्दरद्युतिम्**

**अम्भोजनाभं स भुजङ्गशायिनं**

**श्रीवल्लभं श्रीमदनन्तसत्पुरे"** [मध्व.5.36] भुजङ्गशायिनं भगवन्तं नत्वा

अत्र सभायां ब्रह्मसूत्राणां अर्थं व्याचख्यौ । कतिपयदिनानि अत्र स्थित्वा अत्रत्येषु तीर्थेषु अनुष्ठानं विधाय भाष्यरचनायै मतिं चक्रे । तदारभ्य अस्मिन् देवालये तौळवप्रान्तीयाः एव अर्चकाः प्रधानार्चकाः । ते च श्रीकाणियूरुमठस्य शिष्याः । इदानीमपि अष्टमठस्य सम्पर्कः विशेषेण वर्तते ।

अयं फलितार्थः । तिरुवनन्तपुरं सन्दर्शितुं अहं गतवान् । तदा राजा मार्ताण्डवर्मा आसीत् । तस्य सहायकं पृष्ठवान् । श्रीमध्वाचार्यस्य विशये किमपि स्मारकं शासनं व लभ्यते ? इति । तदा सः उक्तवान् "सर्वमपि बृहत्प्रकोष्ठे स्थापितम् । वस्तूनां राशिमध्ये अन्वेष्टुं अनुमतिः नास्ति" इति । यदि विशेषज्ञः प्रयतेत् निश्चयेन अपूर्वविषयः प्रकाशमानो भवति । परन्तु दौर्भाग्यमस्माकम् । सर्वकारस्य आक्रमणकारणेन अधिकारिणः अपि असमर्थाः सन्ति ।[ चित्रं पृष्ठे]

## कन्याकुमारी

श्रीमध्वाचार्यः तिरुवनन्तपुरतः कन्याकुमारीं आजगाम । कन्याकुमारी भारतमातुः पदतलम् । तत्र अरब्बीसमुद्रस्य–हिन्दूमहासागरस्य–बङ्गाळकोल्लि इति सागरत्रयाणां सङ्गमः भवति । चैत्रमासे पूर्णिमायां चन्द्रोदयं सूर्यास्तञ्च द्रष्टुं जनसागर एव भवति । अस्मिन्नेव परिसरे सावित्री–गायत्री–सरस्वती–पापनाशिनी इत्यादीनि तीर्थानि सन्ति । तेषु कन्यातीर्थं प्रधानम् ।

पूर्वं अर्जुनः वनवासे अत्र आगतः । अस्मिन् कन्यातीर्थे वर्गाद्याः पञ्च अप्सरस्त्रियः शापकारणेन मकररूपेण आसुः । अर्जुनः ताः स्त्रियः मुमोच इति महाभारते वर्णितम् ।

**गच्छन् प्रभासं शापतो ग्राहदेहाः ।**

**अमूमुचच्छाप्सरसः स पञ्च ताभिर्गृहीतः प्रविकृष्य तीरम् ।**

**एवं तासां शापमोक्षः प्रदत्तः यदाऽखिला वो युगपत्संप्रकर्षेत् ॥**

**एकस्तदा निजरूपाप्तिरेवेत्यलं तुष्टेन ब्राह्मणेनानतानाम् ।**

**विप्रापहासात्कुत्सितयोनितस्ताः कन्यातीर्थे पाण्डवः संप्रमोच्य ॥** [म.भा.ता.नि.216.3–5] इति ब्राह्मणशापकारणात् ताः अप्सरसः तीर्थे आसन् । अर्जुनः मुमोच । पाण्डवा अपि आजग्मुः । कन्यातीर्थस्य स्पर्शनात् सर्वपापानि प्रणश्यन्ति इत्यपि महाभारते उक्तम् ।

**ततस्तीरे समुद्रस्य कन्यातीर्थमुपस्पृशेत् ।**

**तत्रोपस्पृश्य राजेन्द्र सर्वपापैः प्रमुच्यते ॥** [वनपर्व.85.23]

श्रीमद्भागवतेऽपि बलरामः तीर्थयात्रां कुर्वन् कन्याकुमारीं आजगाम इति निरूपितम् ।[भा.10.79.17] । तीर्थस्य अनतिदूरे देवालयः वर्तते । अत्र कन्याकुमारी मनमोहनरूपेण विराजते । नवरात्रौ विशेषोत्सवः भवति । कन्याकुमारी साक्षात् महालक्ष्मीः [53] । पूर्वं "बाण" इति राक्षसः आसीत् । स तु शिवं तपस्तेपे । कन्यां विहाय अन्यैः संहारः माभूत् वरं ययाचे । अतः दृप्तं राक्षसं संहर्तुं भगवदाज्ञया देवी दुर्गा कन्याकुमारी इति रूपेण [54] अवततार ।

श्रीमध्वाचार्यः अस्मिन् कन्यकातीर्थे स्नात्वा अनुष्ठानादिकं चकार ।

**स्नात्वाऽत्र तीर्थेष्वचिरेण कन्यकातीर्थे सुतीर्थे सुखतीर्थ आप्लुतः ।** [मध्व.5.42] कन्यातीर्थे स्नानं कृत्वा श्रीरामेश्वरं जगाम ।

अयं फलितार्थः । श्रीमध्वाचार्यः पूर्वं भीमावतारे अनुभूतस्यैव अस्य क्षेत्रस्य सन्दर्शनं अकरोत् । एतेन कार्येण स्वयमेव भीमः पौनपुण्येन स्मारयति । अस्मिन् क्षेत्रे कन्यातीर्थस्नानं विशेषफलप्रदं इति सूचयितुं काव्ये स्नानस्य निरूपणं अकरोत् । भारतस्य उत्तरभागे बदरीनारायणः विराजते । दक्षिणमूले कन्याकुमारी विराजते । अर्थान् नारायणस्य पादतले लक्ष्मीः निवसति । बहवः कन्याकुमारीं गमिष्यन्ति । केवलं सूर्यास्तम् द्रष्टुम् । जीवने यस्य कस्याऽपि अस्तङ्गमदर्शनं न करणीयम् । समुद्रे स्नान्ति सर्वे । परन्तु यत्र कन्यातीर्थमस्ति इत्यपि चिन्तयन्ति ।

## श्रीरङ्गक्षेत्रम्

**श्रृङ्गारसिन्धुं स भुजङ्गशायिनं**

**श्रीरङ्गवासं कृतमङ्गळं सताम् ।**

**अमन्दधीः देवमवन्दतागतः**

**कवेरकन्याहिमवायुसेवितम्** [मध्व....] इति कविः श्रीक्षेत्रं अवर्णयत् ।

श्रीरङ्गक्षेत्रम् अष्टस्वयंव्यक्तक्षेत्रेषु एकम् । आदिरङ्गक्षेत्रम्–मध्यरङ्गक्षेत्रम्–अन्त्यरङ्गक्षेत्रम् इति रङ्गत्रयक्षेत्रं [55] सुप्रसिद्धम् । तेषु इदं क्षेत्रं अन्त्यरङ्गक्षेत्रम् । अत्र उत्सवः विशेषः । कावेरीमहानद्याः मध्ये विराजमानं रम्यद्वीपं श्रीरङ्गक्षेत्रम् [56] । ब्रह्माण्डसदृशं क्षेत्रम् । अत एव सप्तप्राकारप्रदक्षिणसेवया ब्रह्माण्डप्रदक्षिणफलं लभते इति पुराणेषु वर्णितम् । सप्तप्राकारोपेतं इदं मन्दिरं भारतखण्डे एव विशालायतनम् । कावेरी महानदी [57] अत्र प्रवहति । तमिळुनाडुराज्यस्य तिरुचिरापळ्ळि नगरतः अनतिदूरे विद्यते ।

पुरा सूर्यवंशे इक्ष्वाकुमहाराजः आसीत् । सः चतुर्मुखं तपस्तेपे । तेन सन्तुष्टः ब्रह्मा अस्मै श्रीरङ्गनाथविग्रहं अदात् ।

पूर्वं इदं विग्रहं साक्षात् श्रीमन्नारायणः चतुर्मुखाय ददौ । अस्य वंशस्य श्रीरामोऽपि इदं विग्रहं आराधयामास । श्रीरामः परंधामसमये विभीषणाय अदात् । विभीषणस्तु इदं विग्रहं स्वीकृत्य लङ्कां प्रस्थितवान् । मार्गे आह्निकार्थं श्रीरङ्गस्य चन्द्रपुष्करिण्यां अवातरत् । तदा इदं विग्रहं अत्रैव स्थिरोऽभवत् इति स्कादपुराणे निरूपितम् । इदानीमपि लङ्काभिमुखो वर्तते इदं विग्रहम् । प्रतिदिनं आगत्य रहसि चिरञ्जीवी विभीषणः [58] पूजां समर्पयति इति प्रतीतिः ।

श्रीरङ्गनाथः शेषशायी वर्तते । चतुर्भुजयुक्तः सन् विराजते । पादकमलसमीपे श्रीमहालक्ष्मी–विभीषणश्च उपविशन्तौ । अत्यन्तसुन्दरमूर्तिः । अनेके महानुभावाः तपसा भगवन्तं आराधयामासुः । वैकुण्ठेकादशीदिने विशेषोत्सवः महता वैभवेन प्रवर्तते । देवालयस्य पञ्चमप्राकारे चन्द्रपुष्करणी इति पुष्करणी वर्तते । अत्रैव चन्द्रः तपश्चकार ।

अस्मिन् देवालये सप्तप्राकारप्रदक्षिणसेवा विशिष्टा वर्तते । कावेरीनद्यां स्नात्वा बहवः तां सेवां कुर्वन्ति ।

श्रीमध्वाचार्यः श्रीरामेश्वरे चातुर्मास्यव्रतं समाप्य परमवैष्णवं श्रीरङ्गक्षेत्रं आजगाम । कवेरकन्याहिमवायुसेवितं श्रीरङ्गं नमश्चकार । तत्ववादप्रचारञ्च कारयामास । तत्रत्याः भक्ताः अधिकसङ्ख्यया वैष्णवदीक्षां स्वीचक्रुः । श्रीमध्वाचार्यस्य प्रभावेन माध्वपरम्परायां अनेके यतयः अत्रैव साधनां अकुर्वन् । श्रीमध्वाचार्यस्य परम्परायां आगतः श्रीजयतीर्थश्रीपादः बहुकालं अत्र उषित्वा सिद्धान्तप्रचारकार्यं चकार इति ''जयीन्द्रोदय''ग्रन्थे वर्णितम् । श्रीपद्मनाभतीर्थपरम्परायां आगतः श्रीश्रीपादराजतीर्थश्रीपादः अस्मिन्नेव क्षेत्रे बहुकालं उवास ।

अस्मिन् देवालये प्रतिदिनं श्रीवैष्णवाः आळ्वार्प्रबन्धं वाचयन्ति । तेन प्रभावितः श्रीश्रीपादराजतीर्थः कन्नडभाषायां कीर्तनानि अरचयत् [59 । अत्रैव श्रीस्वर्णवर्णतीर्थश्रीपादानां मूलवृन्दावनं विद्यते । एवमेव श्रीराघवेन्द्रमठस्यापि अनेकानां यतीनां मूलवृन्दावनानि सन्ति ।

अयं फलितार्थः । श्रीरङ्गक्षेत्रं परमपावनं वैष्णवक्षेत्रम् । श्रीमध्वाचार्यस्य प्रभावः भूयिष्ठः वर्तते । माध्वमठाधीशेभ्यः देवालये विशेषगौरवं कुर्वन्ति । तत्राऽपि उडुपि पर्यायसञ्चारे श्रीपादा अपि अत्र आगच्छन्ति । तेभ्यः सगौरवं सन्मानं करिष्यन्ति । एवं बलिष्ठसम्बन्धः विद्यते । माध्वमठाधीशानां विद्वज्जनानाञ्च साधनक्षेत्रम् ।

## रामेश्वरे श्रीरामदूतः

श्रीमध्वाचार्यः भारतस्य प्रसिद्धक्षेत्रं श्रीरामेश्वरं आजगाम । तत्र समुद्रसेतौ मज्जनं अकरोत् ।

**समुद्रसेतौ च निमज्य विष्णवे**

**श्रीरामनाथाय नमश्चकार सः ॥** [मध्व.5.42]

तदानीं चातुर्मास्यकालः । तत्रैव चतुरो मासान् उवास ।

**"उवास मासांश्चतुरो महामनाः**

**सिंहो गुहान्तोपगतः शुनामिव"** [मध्व.5.46] इति वर्णितम् ।

श्रीरामेश्वरक्षेत्रं दक्षिणभारतस्य महाक्षेत्रम् इति सुप्रसिद्धम् । अत्र सेतुदर्शनम्, समुद्रस्नानम्, श्राद्धादिकार्यं कृत्वा भक्ताः कृतार्थाः भवन्ति ।

श्रीक्षेत्रं ब्रह्माण्डपुराणे वर्णितम् । श्रीरामेश्वरक्षेत्रे श्रीरामप्रतिष्ठितः श्रीरामेश्वरः शिवः विराजते । श्रीरामः लङ्कायां रावणं हत्वा विभीषणं अभ्यषेचयत् । पुष्पकविमाने उपविष्य अयोध्यां निर्जगाम ।

मार्गे ब्रह्महत्यादोषं परिहर्तुं अचिन्तयत् । रावणादयः ब्राह्मणाः । तेषां संहारेण ब्रह्महत्या दोषः सम्भवति इति चिन्तयित्वा अगस्त्याश्रमं आजगाम । मुनेः निर्देशात् शिवलिङ्गप्रतिष्ठां कर्तुं निश्चिनोति । तदा हनूमान् कैलासं जगाम । परन्तु लिङ्गं आनेतुं विळम्बः सञ्जातः । तदा श्रीरामः सीतानिर्मितं सिकतालिङ्गिं प्रतिष्ठापयामास । तेन रामेश्वर इति प्रख्यातः अभवत् । तथैव हनुमदानीतं लिङ्गमपि प्रतिष्ठापितवान् । "हनुमदीश्वर" इति तस्य नाम । नव पाषाणेन नवग्रहान् अपि प्रतिष्ठापितवान् । इदानीं "नवपाषाणम्" इति नाम ।

वस्तुतः भगवन्तं श्रीरामं ब्रह्महत्या नैव बाधते । अपि च रावणः न ब्राह्मणः । कथं वा तस्य हननेन ब्रह्महत्या ? तस्य हननेन लोककल्याणः भवति । रामेण निर्मितस्य रामसेतोः दर्शनेनैव ब्रह्महत्या नाशः [60] ।

श्रीरामः जगत्कल्याणाय रामसेतुं रामलिङ्गं च प्रतिष्ठापयामास । अस्मिन्नेव श्रीरामेश्वरे "समुद्रसेतौ च निमज्य विष्णवे श्रीरामनाथाय नमश्चकार सः" [मध्व.5.42] इति काव्योक्तरीत्या चातुर्मास्यकाले श्रीमध्वाचार्यस्य दिनचरी आसीत् । चातुर्मास्यव्रतं विघ्नं कर्तुं कुदिपुस्तूरुवंशजः तत्र आजगाम [61] । तं दृष्ट्वा श्रीमध्वः दण्डं प्रकाश्य हसन् अभाषत **"खण्डेत दण्डो यदि चण्ड न त्वया त्वं अपण्डितः अवन्ध्यवाक्"** इति [मध्व.5.43] । तदा दण्डस्य खण्डने असमर्थः सः लज्जानतस्सन् निर्जगाम । एवं श्रीरामेश्वरे प्रवृत्ते चातुर्मास्ये सर्वासु सभासु विद्याधिपतिः श्रीमध्वाचार्यः जिगाय ।



## प्रमाणम्

[1] त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।
विष्णोः सहस्रनामापि निरन्तरशतार्थकम् ॥[ऋ.भा.1.1.76]

[2] पयस्विनि जगत्स्वामी त्वयि सन्निहितो धृवम् ।
न चेत् तत्प्रेयसी तीरे कथं तेऽवतरिष्यति ॥ [ती.प्र.1.45]

[3] दुर्गा पुनर्विप्रकुले अवतीर्णा हनिष्यति व्रातमथासुराणाम्
[म.भा.ता.नि.32.164]

[4] ಚೆಮ್ಮಾಡಿನ ವಿವರ. [ತು.ನಾ.ಮ.ಪ–ಪುಟ19]

[5] पयस्विनि जगत्स्वामी त्वयि सन्निहितो धृवम् ।
न चेत् तत्प्रेयसी तीरे कथं तेऽवतरिष्यति [ती.प्र.1.45]

[6] सर्वत्राखिलसच्छक्तिः स्वतन्त्रोऽशेषदर्शनः ।
नित्यातादृशचिच्छेत्ययन्तेष्टो नो रमापतिः ॥ [तत्वोद्योतः]

[7] पारन्तीसुरसदनस्य "केवुडदेल" इत्यपभ्रष्टभाषा [भा.प्र.]

[8] ಡಾ.ಗುರುರಾಜರು ಶಿಲಾಶಾಸನ ಸ್ಂಗ್ರಹದಲ್ಲಿ ಇದನ್ನು ದಾಖಲಿಸಿದ್ದಾರೆ .

[9] तापत्रयेण सन्तप्तं येदेतदखिलं जगत् । वक्ष्यामि शान्तये तस्य कृष्णामृतमहार्णवम् ॥ संसारविषपानेन ये मृताः प्राणिनो भुवि । अमृताय स्मृतः तेषां कृष्णाम्रुतमहार्णवः ॥

[10] उच्चभूतिः उच्चस्य "उजेर्य" इत्यपभ्रष्टभाषा [भा.प्र]

[11] इदं जना उप श्रुत नराशंस स्तविष्यते ।
षष्टिं सहस्रा नवतिं च कौरव आ रुशमेषु दद्महे॥ [अथर्वसंहिता]

[12] एवं प्रळयकालेऽपि प्रतिभातपरावरः । [अनु.व्या.]

[13] सूरिसूनुं विजित्य व्याख्याता तस्य
पूर्णप्रमतिः अनुदिनं व्याख्यया [प्र.न.28]

[14] साम्नस्त्रैविक्रमार्यात् व्यरचयदनुभाष्यं शतग्रन्थकर्ता. [प्र.न. 29]

[15] प्राचीनव्याख्यानकाराः ग्रन्थेषु वर्णयामासुः ।

[16] अर्चितः संस्मृतो ध्यातः कीर्तितः कथितः श्रुतः ।
यो ददात्यमृतत्वं हि स मां रक्षतु केशवः ॥

[17] पादप्रहारमुरुवृक्षतले विधाय
साकं फलैः विनिपतत्सु फलान्यभुङ्क्त ।[म.भा.ता.नि.14.62]

[18] अणिमा महिमा मूर्तेः लघिमा प्राप्तिरिन्द्रियैः ।
प्राकाम्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥
गुणेष्वसङ्गो वशिता यत् कामः तदवाप्स्यति ।
एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मता ॥ [भा.व.11.15.4–5]

[19] खण्डकलशाख्य तुङ्गभद्रातीरे [वि.प]

[20] At one point is a large boulder, a big square-shaped stone place horizontally on another. On the former is an inscription in sanskrit, stating that Sri Madhvacharya brought and placed it there with one hand!- (Extract from Mysore A Gazetteer Compiled by B.Lewis Rice (Re-vised Edition)Vol.2-Mysore)

Madhvacharya Bande – At Ambuteertha alluded to earlier, the river Bhadra rushes very deep between

some water-worn rocks. Here at one point, there is a large boulder which is a big square-shaped stone placed horizontally on another. The former, which is called Madhwacharya Bande or Bheemana-Kallu has an inscription in Samskrita, stating that Shri Madhwacharya(the founder of the Dwaita school philosophy) brought and placed it there with one hand. The length of this stone is 6.1 meters, breadth 3.6 meters and height 10.98 meters. The circumstances under which he brought the stone are mentioned in the Madhwa-vijaya. The saint saw a big rock which had been brought by about a thousand men for some teertha and abandoned through utter inability. He is stated to have enquired why was the rock not conveyed (to its destination) for the good of the people. The crowd at the place relied that there were no men able to convey it there and that even Bheema were to try it was doubtful if he could do it or not. It is stated that there upon, he bore up the rock easily with one hand. As in the form of hanuman, he had borne up the mountain(Gandhamadana) a, and placed it at the intended spot.

There is a figure of Madhvacharya about 11 cms high, carved on upped part of the rock..

-Extract from Chikmagulur District Gazetteer,

Ed. By K. Abhishankar-1981, Bangalore.

At one point is a large boulder, a big square-shaped stone placed horizontally on another. On the former is an inscription in sanskrit, stating that Sri Madhwacharya brought and placed it there with one hand .

The circumstances under which he brought the stone here are related in the Madhva-vijaya. Maheksha(Madhvacharya)saw a big rock, capable of supporting the fall of water from a height, which had been brought by a thousand men for some tirtha, and abandoned through utter inability. Why was the rock not conveyed (to its destination) for the good of the people? He inquired; When the crowd at the place replied, that there were no men able to convey it there and that even if Bhima were to try, it was doubtful whether he could do it or not. Whereupon he bore up the rock easily with one hand, as in the form of Hanuman he had borne up the

mountain(Gandhamadana), and placed it at the destined spot. And this rock in the Tunga even now bears witness to its deed.

-extract from Mysore Gazetteer, Vol.5,

Ed. By C. Hayavadana Roa, Bangalore (1930)

[21] किञ्चिद्दूरं ततो गत्वा भार्गवो भर्गसन्निभः ।
विघ्नेश्वरं प्रतिष्ठाप्य मधुपुर्यामपूजयत् ॥
विघ्नेश्वरालयं तत्र कारयित्वा समण्डपम् ।
घृतापूपं च नैवेद्यं कल्पयामास शाश्वतम् ॥
लक्ष्मीधर द्विजायाऽथ क्षेत्रतन्त्रं ददौ प्रभुः ।
क्षेत्रकार्यं तुरीयं च सामन्ततनयाय च ॥ [ब्र.पु.1.27]

[22] ततोऽयमायाति तमर्चयेति स्थानाधिकारी जटिनं त्रिशूलिनम् ।
स्वप्ने ब्रुवाणं त्रिरवेक्ष्य दूरतः प्रायादुदन्तं च जगाद विस्मितः ॥
[भा.प्र.10.50]

[23] यत्किञ्चात्मनि कल्याणं संभावयसि पाण्डव ।
सहस्रगुणमप्येतत् त्वयि संभावयाम्यहम् । [म.भा.]
सामर्थ्यांशांशमेवात्र प्रादुश्चक्रे जगद्गुरुः ।
तत्रापि अमर्त्यदृश्यांशो देवैरेवान्वभूयत [म.भा.प्र.]

[24] चतस्रो घटिकाः प्रातः अरुणोदय उच्यते ।
यतीनां स्नानकालोऽयं गङ्गाम्भः सदृशः स्मृतः ॥ [कृष्णा.म.88]

[25] "अनन्तमठ" इतिमनुष्यगोचरबदरिकाश्रमे नारायणमन्दिरस्य आख्या
[प.दी.6.44]

[26] काष्ठया उत्कर्षेण अतिशयेन ......मौनं....आभाषणव्रतं.......
लौकिकभाषणवर्जनरूपं मौनम् ॥ [छ.आ]

[27] यस्त्रिवारमितरासुतशाखास्वर्थमग्र्यमश्रुणोत् पुरुसाङ्ख्यात् ॥
[मध्व.6. 50]

[28] वानरेन्द्र इव वायुजवोऽसौ भीमसेन इव दानवभीमः ।
उल्ललास गिरिपुङ्गवश्रुङ्गे ॥ [मध्व.654].

[29] स्थावराणां हिमालयः [गीता.10.25]

[30] ब्रह्मनद्याः सरस्वत्याः आश्रमः पश्चिमे तटे ।
शम्याप्रास इति प्रोक्तः ऋषीणां सत्रवर्धनः ॥ [भा.व 1.7.2]

[31] धर्माद्योजनि धर्म एव स रतिं दद्यात् स्वयोगश्रियम्
योगाभ्यासरतः स्वरादिविजयम् कन्दर्पदर्पापहः ।
उत्तुङ्गाद्रिगतः सदोच्चपदवीं योषित्कदम्बेषु नः
पुत्रीवन्मतिमुर्वशीजनयिता नारायणः सद्गुणान् ॥ ती.प्र.2.42]

[32] कुरुक्षेत्रं गयां गङ्गां . . .एतानि मनसा ध्यात्वा
अवगाहम् ततो जले ॥
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा
यः स्मरेत् कुरुक्षेत्रं स बाह्याभ्यन्तरे शुचिः [वामने.12,6]

[33] ततः कुरुक्षेत्रमवाप्य कृष्णो दीक्षां प्रपेदे द्वषडब्दसत्रे ।
एवञ्च स व्यासभृगूद्वहात्मा चक्रेऽत्र सादस्यमचोऽप्रमेयः ॥
[म.भा.ता.नि.32.1]

[34] ततो वसन् स्वपुर्यजः क्वचिद्रविग्रहे हरिः ।
सदारपुत्रबान्धवः स्यमन्तपञ्चकं ययौ ॥ [म.भा.ता.नि.21.4]

[35] श्रुणु सप्त वनानीह कुरुक्षेत्रस्य मध्यतः ।
येषां नामानि पुण्यानि सर्वपापहराणि च ॥ [वामनपुराणम्]

[36] नदीमोघवतीमनु..... [म.भा.शा.प.15.28]

[37] पांसवोऽपि कुरुक्षेत्रान् वायुना समुदीरिताः ।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् [म.भा.श.प.53.17]

[38] ममायुधं क्वेति जगाद सत्यवाक् खातेऽमुनोक्ते कुतले महागदां
दृष्ट्वाऽऽप्तवाचं श्रदधुर्गुरुं हि ते ॥ [भ.प्र.]

[39] द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात् ।
वर्जयित्वा महाराज श्रीमद्भागवदालयम् [भा.व.11.31.23]

[40] श्रीकृष्णचरणाम्भोजरजोरञ्जितगोमतीम् ।
गोमतीमब्धिरमणीं भजे तापत्रयापहम् ॥ [ती.प्र.1.93]

[41] विमतं वाक्यं न मानम् व्यभिचारित्वात् उन्मत्तवाक्यवत् [भा.प्र]

[42] सुहोत्रः खलु इक्ष्वाकुकन्यामुपयेमे सुवर्णां नाम ।
तस्यामस्य जज्ञे हस्ती । य इदं हस्तिनापुरं स्थापयामास ।
एतदस्य हस्तिनापुरत्वम् [म.भा.आदि.95/34]

[43] आप इव काशिना सङ्गृभीताः मघवन् काशिरित्ते [ऋ.वे.]

[44] भूमिष्ठाऽपि न यत्र भूस्त्रिदिवतोऽप्युच्चैरधःस्थाऽपि या
या बद्धा भुवि मुक्तिदा स्युरमृता यस्यां मृता जन्तवः ।
या नित्यं त्रिजगत्पवित्रतटिनीतीरे सुरैः सेव्यते
सा काशी त्रिपुरारिराजनगरीपायादपायाज्जगत् [स्क.का.ख.]

[45] अहं काशीं गमिष्यामि तत्रैव निवसाम्यहम् ।

इति ब्रुवाणः सततं काशीवासफलं लभेत् [स्कान्दे]

[46] सिंहस्थिते गौतमदेवि भद्रे ब्रह्माण्डभाण्डोपगतानि पुण्ये ।

भुव्यन्तरिक्षे दिवि नागलोके सर्वाणि तीर्थानि तवोदरे स्युः ॥

तिस्रः कोट्योऽर्धकोट्यश्च तीर्थानि भुवनत्रये ।

आयान्ति गौतमि स्नातुं सिंहस्थे च बृहस्पतौ ॥

षष्ठिवर्षसहस्राणि भागीरथ्यवगाहनम् ।

सकृद् गोदावरीस्नानं सिंहस्थे च बृहस्पतौ ॥

कथञ्चिदपि सिंहस्थे गुरौ स्नानं समाचरेत् ।

गौतम्यां जन्मनः पुंसां यत्फलं जीवितस्य तु ॥ [स्मृत्यर्थसागरे]

[47] षण्मासफलदा गोदा [कृष्णा.म]

[48] यः कर्नाटकपूर्वसज्जनगुरुः श्रीपद्मनाभाह्वयः [ सं.प.18]

[49] श्रीरघुवंशशेखरं पद्मनाभाह्वययोगिमौलये [सं.प.17]

[50] श्रीपद्मनाभयतिसिन्धुसमुत्थितेयम् सन्न्यायरत्नपरमावलिरुज्वलाऽलम् ।

भूयादशेषसुजनौघसुखैकहेतुः सूत्रानुभष्यपददीपनदीपरूपा

॥[सन्न्यायरत्नावलिः॥

[51] श्रीमध्वसंसेवनलब्धशुद्धविद्यासुधाम्भोनिधयोऽमला ये ।

कृपालवः पङ्कजनाभतीर्थाः कृपालवः स्यान्मयि नित्यमेषाम् [त.प्र]

[52] दिव्यगेयविदग्धोऽसौ सर्वज्ञ इति याचितः ।

विद्वद्भिरत्र कृतवान् गानशास्त्रं सुदुर्लभम् ॥ [भा.प्र.]

[53] दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः । [ भा.व.10.79.17]

[54] सहधर्मं वदधतीमिव बाणान्तकारिणम् ।

वार्धौ स्निग्धामिमां रम्यां कन्यां मन्यामहे रमाम् ॥ [ती,प्र.4.33]

[55] त्रीणि त्रयी परिजगाद यतात्मदृष्टिद्वाराणि चारुतरशीलनरोचितानि ।
प्रत्यक्षमेतदनुभावयति प्रमेयं प्रौढप्रजाः प्रभुरनन्तपुरेऽब्जनाभः॥
[ती.प्र.4.41]

[56] मञ्चस्थं च गोविन्दं डोलास्थं रङ्गमेव च ।
रथस्थं केशवं दृष्ट्वा पुनर्जन्म न विद्यते ॥

[57] कावेरीहृदये वसन् कमलभूतातः कृपावीक्षणैः
जीवांहः शमयन् श्रिया च धरया सेव्योऽतिभाव्यो विभुः ।
देवैरावरणस्थितैः कृतनतिः शेषाङ्गशायी सदा
भावे मे विधुपुष्करिण्यधिपतिः श्रीरङ्गनाथोऽस्त्वयम् ॥ [ती.प्र.4.1]

[58] ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ।
कावेरी च महापुण्या प्रतीची च महानदी ॥
ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ।
प्रायो भक्ताः भगवति वासुदेवेऽमलाशयाः ॥ [भा.व]

[59] अश्वत्थामो बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥

[60] ಕಂಗಳಿದ್ಯಾತಕೋ ಕಾವೇರಿ ರಂಗನ ನೋಡದ
ಜಗಂಗಳೊಳಗೆ ಮಂಗಳಮೂರುತಿ ರಂಗನ ಶ್ರೀಪಾದಂಗಳ ನೋಡದ
ಕಂಗಳಿದ್ಯಾತಕೋ ಕಾವೇರಿ ॥

[59] सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति । [स्कान्दे]

[61] अप्रांश्चाद्याश्च तत्रोषुः चातुर्मास्यं ततो विभोः ।
दीक्षाविघ्नं चिकीर्षन्तः ताडनं च अभवत् खलु ॥ [भा.प्र.5.46]

# चतुर्थोऽध्यायः

द्वारकातः श्रीकृष्णस्य आगमनम् – श्रीकृष्णमठः – उत्सवप्रियः श्रीकृष्णः श्रीमध्वप्रतिष्ठिताः मठाः – श्रीअच्युतप्रज्ञाचार्यः – गृहस्थशिष्याः

महाकाव्ये अनुक्तानि अन्यत्रोक्तानि क्षेत्राणि– आनन्दतीर्थाग्रहारः– तिरुपतिक्षेत्रम् –मुत्तिगेग्रामः– श्रीमुष्णम् – मध्यवाटमठः – कटत्तिलमठः

# चतुर्थोऽध्यायः

## द्वारकातः श्रीकृष्णस्य आगमनम्

श्रीमध्वाचार्यः सज्जनोद्धरणाय निःश्रेयसविघ्नादिदोषनिवारणार्थं सर्वाभीष्टप्रदायिनं श्रीकृष्णं प्रतिष्ठापयितुं अकामयत् ।

**नन्वनन्यशरणात्मनां सतां**

**सिद्धिविघ्नमुखदोषभेषजम् ।**

**ऐच्छदच्छलदयोदयादयं**

**रूप्यपीठपुरगः कदाचन ॥** [मध्व.9.40] मुक्तियोग्यानां सतां कलौ युगे विघ्ननिवृत्तिद्वारा मोक्षसाधनसिद्ध्यर्थं श्रीकृष्णसन्दर्शनं आवश्यम् । अत एव श्रीकृष्णं प्रतिष्ठापयितुं ऐच्छत् ।

एकदा समुद्रप्रदेशे वडभाण्डेश्वरे स्नात्वा ध्यानमग्नः बभूव । तदा प्रवहणद्वारेण द्वारावतीतः काचन नौः आजगाम । चण्डमारुतस्य आघातेन वारिधौ निमज्जत । परन्तु तीरं अप्राप्त्यैव दूरे एव तस्थौ । कर्मकारादिभिः प्रार्थितः श्रीमध्वाचार्यः स्ववस्त्रवायुना नावं तीरं प्रापयामास । संतप्तान् सांयात्रिकान् दशान्तवातेन ररक्ष । सन्तुष्टाः सर्वे प्रार्थयामासुः । तस्यां रूप्यपीठपुरं आगच्छन्तीं विश्वकर्मनिर्मितां श्रीरुक्मिणीकरकमलार्चितां [1] श्रीकृष्णमूर्तिं ध्यानचक्षुषा समीक्षयामास । गोपीचन्दनलिप्तां तां प्रतिमां गोपीचन्दनबुद्धयः सांयात्रिकाः समाजह्रुः । । नाविकानायकस्य प्रार्थनया तत्रस्थं गोपीचन्दनं ऐच्छत । सर्वविन्मध्वः सज्जनानां श्रेयोविघ्नविघातार्थं चिन्तयन् तदन्तिकं आजगाम । तत्र मग्नां प्रतिमां स्वीचकार । तां समादाय मध्वसरोवरे मलक्षाळनं कारयामास । स्पर्शनादेव श्रीकृष्णशिलायां सन्निधानपदतां अगमत् ।

**गोपिकाप्रणयिनः श्रियःपतेः**

**आकृतिं दशमतिः शिलामयीम्** ।

**शिष्यकैः त्रिचतुरैः जलाशये**

**शोधयन्निह ततो व्यगाहयत्** ॥ [मध्व.9.4] ।

श्रीकृष्णप्रतिमां शिष्यैःक्षालयित्वा स्वयं पुरुषसूक्तेन अभ्यषिञ्चत् ।

परमानन्दभरितस्सन् द्वादशस्तोत्रं पठन् मन्दहासमृदुसुन्दराननं नन्दनन्दनं अतीन्द्रियाकृतिं श्रीकृष्णविग्रहं प्रतिष्ठापयामास । तन्त्रसारागमानुसारं प्रतिष्ठापनविधिः प्रवृत्ता ।

**मन्दहासमृदुसुन्दराननं**

**नन्दनन्दनमतीन्द्रियाकृतिम्** ।

**सुन्दरं स इह सन्न्यधापयत्**

**वन्द्यमाकृतिशुचिप्रतिष्ठया** ॥ [मध्व.9.43] एवंमकरसङ्क्रमणपर्वकाले श्रीकृष्णस्य प्रतिष्ठापनं अभवत् । द्वारकाधिपतेः श्रीकृष्णस्य प्रतिष्ठाविचारे "अप्रकटितस्कान्दपुराणस्य रूप्यपीठक्षेत्रमहिमा" अपूर्वमहिमां ददाति ।

**"कृष्णं वन्दे मन्थपाशधरं दिव्याकृतिम्** ।

**शिखाबन्धत्रयोपेतं भैष्मीमध्वकरार्चितम्"** इति ।

**वामेन बाहुना दाम दधानः कोमलाकृतिः।**

**दक्षिणेन तु मन्थानं सर्वाभीष्टप्रदायकः** ॥ इति ।

## अस्मिन् विषये पूर्वाचार्यप्रवादः

सप्तदशशतके श्रीपलिमारुमठे श्रीरघुवर्यतीर्थाः समभवन् । ते अस्याः कथायाः विवरणं ददुः ।

**"कदाचिद् देवकीदेवी द्वारकायां सुतं हरिम् ।**

**उवाच बाललीलानां दर्शनोत्सुकमानसा"** ॥ इति ॥

एकद माता देवकी श्रीकृष्णबाललीलां द्रष्टुं अकामयत । सुतं कृष्णं अवोचत् ।

**"यशोदा बाललीलास्ते विलोक्य परमां मुदम् ।**

**जगाम किल तत्रैकां लीलां मे कृष्ण दर्शय"** ॥ इति ।

तदा श्रीकृष्णः

**"कृष्णो भूत्वा बालकः कर्हिचित् ताम् ।**

**प्राप अमन्दं दधि संलोडयन्तीम् लीलाभावैः रञ्जयन् मातृचित्तम्"** ॥

मातुः तुष्ट्यर्थं बाललीलां अदर्शयत् ।

**"कालमल्पं विहृत्यैवं आकृतिं तामथाप्यधात् ।**

**देवकी चातिसन्तुष्टा विस्मिता चाभवन्मुहुः"** ॥ कृष्णलीलाविनोदेन

देवकी आनन्दतुन्दिला अभवत् ।

**"तदैव भैष्मी च समीक्ष्य माधवम्**

**सदाऽप्यनन्ताकृतिदृष्टिमत्यपि ।**

**पुनःपुनर्नूतनमेतदाकृतिं**

**निर्मापयामास तदा तदाकृतिम्"** ॥

सदा कृष्णस्य अनन्तरूपं पश्यन्त्यपि रुक्मिणी नित्यनूतनां तां बाललीलां दृष्ट्वा तद्वत् एतदाकृतिं कारयामास ।

**"जनान् विडम्बयन्ती सा नित्यं तत्प्रतिमागतम् ।**

**पूजयामास विभवैः साक्षात् तं पूजन्त्यपि"** ॥

साक्षात् भगवन्तं पूजयत्यपि रुक्मिणी जनान् विडम्बयितुं तं विग्रहं पूजयामास ।

**“कृष्णावतारेऽवसिते फल्गुनो द्वारकास्थिताम् ।**

**स्थापयामास तामर्चां उत्तमां रुक्मिणीवने” ॥**

श्रीकृष्णः यदा अवतारं समापितवान् तदा अर्जुनः श्रीकृष्णादेशानुसारं तां प्रतिमां रुक्मिणीवने स्थापितवान् ।

**“गोपीचन्दनलग्नत्वात् गोपीचन्दनबुद्धयः ।**

**प्रतिमां तां समाजह्रुः दैवात् सांयात्रिकाः कलौ” ॥**

गोपीचन्दनलग्नां तां प्रतिमां गोपीचन्दनमिति मत्वा सांयात्रिकाः नावि संस्थाप्य प्रस्थिताः ।

**“श्रेयोविघ्नविघातार्थं सज्जनानां दयाम्बुधिः ।**

**चिन्तयन् सर्वविन्मध्वो जगाम च तदन्तिकम्” ॥**

सर्वज्ञः श्रीमध्वाचार्यः सज्जनानां कल्याणाय तदन्तिकं आजगाम ।

**“तत्र मग्नां समादाय प्रतिमां द्वादशस्तुतीः ।**

**कुर्वन्नानीय तां रूप्य आस्थापयदनल्पधीः”** ॥ इति तां प्रतिमां स्वीकृत्य प्रतिष्ठापनं अकरोत् ।

## श्रीकृष्णमठः

महतोभारश्रीअनन्तासनदेवालयस्य ईशान्यदिग्भागे अयं मठः विराजते । वस्तुतः अनन्तासनदेवालयस्यैव भागः अयम् । तस्मिन् देवालये पवित्रपाणिः कुञ्जित्ताय इति विप्रः आसीत् । तेन विप्रेण श्रीमध्वाचार्यः श्रीकृष्णप्रतिष्ठानिमित्तं एतत्प्रदेशं स्वीचकार ।

तदारभ्य श्रीमध्वाचार्यस्य सङ्कल्पानुसारं अयं प्रदेशः मठः अभवत् । पूर्वं तत्र अनन्तपुष्करणी इति नाम्ना प्रथिता पुष्करणी इदानीं श्रीमध्वाचार्यस्य सम्पर्कात् "मध्वसरोवर" इति प्रथिता । अत्रैव श्रीकृष्णं अभिषिच्य मठे प्रतिष्ठापयामास । अष्टमठस्य यतयः अखिलाण्डकोटिब्रह्माण्डनायकं बहुधा समभ्यर्चयन्ति । श्रीकृष्णं प्रतिदिनं चतुर्दशपूजाभिः आराधयन्ति । प्रभाते उषःकालादारभ्य रात्रिशयनोत्सवपर्यन्तं चतुर्दशपूजाः समर्प्यते ।

## उत्सवप्रियः श्रीकृष्णः

## चतुर्दशपूजाः

### 1. निर्माल्यविसर्जनपूजा

प्रभाते चतुर्वादने श्रीकृष्णमठस्य उद्घाटनं भवति । पर्यायश्रीपादाः मध्वसरोवरे स्नात्वा जपतपानुष्ठानं पूरयित्वा गर्भगृहं प्रविशन्ति । वेदज्ञाः वैदिकमन्त्रान् वाचयन्ति । प्रथमं देवस्य तुलसी–पुष्प–गन्धादिनिर्माल्यानि विसर्जयन्ति । अस्मिन् समये देवस्य विश्वरूपं द्रष्टुं शक्नुवन्ति भक्ताः । श्रीपादाः पञ्चोपचारपूजां समर्प्य तुळसी–पुष्प–गन्धैः समभ्यर्च्य बालकृष्णाय उपहारसमर्पणं कृत्वा हरिवाणारतिं समर्पयन्ति ।

### 2. उषःकालपूजा

गतदिनस्य निर्माल्यं विसृज्य श्रीपादाः रजतकलशद्वयेन अभिषिच्य मूलबिम्बं प्रक्षालयन्ति । तुळसी–गन्धमाल्यानि समर्प्य नैवेद्यं निवेद्य अष्टौ आर्तिक्यं समर्पयन्ति । अन्नम्–क्षीरम्–दधि–नारिकेलफलम्–कदलीफलम् ताम्बूलञ्च निवेदयन्ति ।

### 3. अक्षयपात्रपूजा–गोपूजा

श्रीमध्वाचार्यः श्रीकृष्णं प्रतिष्ठाप्य "अन्नब्रह्म" इति अपूजयत् । अत एव अन्नाराधनाय श्रीकृष्णस्य सन्निधौ अक्षयपात्रं स्थापयामास । श्रीकृष्णपूजासमये अक्षयपात्रस्य पूजा भवति । तथैव गोपूजा भवति । श्रीकृष्णः गोपालकः । अतः तस्य पूजासमये तत्प्रीत्यर्थं गोपूजा । श्रीकृष्णाय लाजा–गुढं–कदलीफलं समर्प्य हरिवाणारतिं निवेद्य गोपूजां कुर्वन्ति ।

### 4. पञ्चामृताभिषेकपूजा

पर्यायश्रीपादाः गन्धादिनिर्माल्यानि विसृज्य मूलबिम्बं प्रक्षाल्य सुवर्णाभिषेकं कुर्वन्ति । शङ्खपूजां कृत्वा पञ्चामृताभिषेकं कुर्वन्ति । सामान्यतः सर्वत्र क्षीराभिषेकं प्रथमं कुर्वन्ति । अत्र तु प्रथमं घृताभिषेकः । अनन्तरं क्षीरम्–दधि–मधु–शर्करा । द्वात्रिंशत् नारिकेलजलेन फलाभिषेकं प्रतिदिनं कुर्वन्ति । अभिषेकानन्तरं पञ्चोपचारपूजां विधाय गन्ध–पुष्प–तुळसीदळानि समर्प्य अन्नं–फलं–ताम्बूलञ्च निवेद्य अष्टौ आर्तिक्यं समर्पयन्ति ।

### 5. उद्वर्तनपूजा

श्रीपादाः पञ्चामृताभिषेकं विधाय उद्वर्तनं कुर्वन्ति । उष्णोदकेन अभ्यञ्जनं कारयन्ति । अनन्तरं पञ्चोपचारपूजां समर्प्य अन्नं–पयः–नवनीतं–नारिकेलं समर्पयन्ति । आर्तिक्यञ्च प्रकुर्वति ।

## 6. कलशपूजा

पञ्चामृताभिषेकानन्तरं शुद्धोदकस्नानम् । तदर्थं सुवर्णकलशद्वये पुण्यजलम् पूरयित्वा कलशपूजां कुर्वन्ति ।

**"एकपञ्चाशद्वर्णानां चतुर्विंशतिमूर्तयः ।**

**आत्माद्याः वासुदेवाद्याः विश्वाद्याः मत्स्यकच्छपौ ।**

**कोलो नृसिंह सवटुः जामदग्यरघूद्वहौ ।**

**वाशिष्ठयादवौ कृष्णौ आत्रेयौ बुद्धकल्किनौ ।**

**शिंशुमारश्चेति शतं कलाः कलशदेवताः"** इत्युक्तक्रमेण भगवतः

रूपशतं कलशे चिन्तयित्वा पूजयन्ति । गङ्गादिनदीः आवाह्य पूजयन्ति । श्रीकृष्णमन्त्रेण–प्रणवमूलमन्त्रेण च पुण्यजलं अभिमन्त्रयन्ति । ततः गन्धतुलसीं समर्प्य आर्तिक्यं अर्पयन्ति ।

## 7. तीर्थपूजा

भगवतः श्रीकृष्णस्य महाभिषेकार्थं कलशपूजां–पीठपूजां कृत्वा सुवर्णकलशेन महाभिषेकं कुर्वन्ति । तदा वेदज्ञाः पुरुषसूक्तं पठन्ति । अभिषिक्तजलं कलशे पूरयन्ति । भगवदभिषेकजलमेव तीर्थः ।

**"त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।**

**समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ।**

**षण्मासफलदा गोदा वत्सरस्य तु जाह्नवी ।**

**द्वादशाब्दोपवासस्य विष्णुपादोदसेवनम् ।**

**यानि कानि च तीर्थानि ब्रह्माण्डान्तर्गतानि च ।**

**विष्णुपादोदकस्यैते कलां नार्हन्ति षोडशीम्"** इति श्रीकृष्णामृतमहार्णवे श्रीमध्वाचार्येण तीर्थमहिमा वर्णिता ।

वस्त्रेण बिम्बं संशोध्य गन्ध-पुष्पादिना समभ्यर्चन्ति । दोसा-नवनीतं-गुडं-पायसं-नारिकेलफलं-कदलीफलं-ताम्बूलञ्च निवेद्य अर्चयन्ति ।

**8. अलङ्कारपूजा**

एतावत्पर्यन्तं भगवतः मूलबिम्बदर्शनं भवति । इतःपरं अलङ्कारपूजा । विशेषालङ्कारेण देदीप्यमानो भवति भगवान् । अलङ्कारप्रियः श्रीकृष्णः । अत एव श्रीपादाः विविधाभरणैः अलङ्कुर्वन्ति । प्रतिदिनं नूतनालङ्कारः । अलङ्कारवैचित्र्यं अन्यत्र द्रष्टुं न शक्यते । प्रतिदिनं अलङ्कारविशेषः । शुक्रवासरे नवरात्रौ च लक्ष्मी अलङ्कारः । शनिवासरे श्रीनिवासालङ्कारः । श्रीनरसिंहालङ्कारं विहाय विविधालङ्कारं कुर्वन्ति । एवं विविधालङ्कारं कृत्वा समर्चयन्ति ।

**9. अवसरसनकादिपूजा**

इयं विशिष्टा पूजा । अन्यत्र कुत्राऽपि पूजेयं नास्ति । माध्वपीठस्य वंशावळिः सनकादिमुनिभिः आरब्धा ।

**"वंशस्यादीन् सनकादीनुपास्ये**

**दूर्वाससं परतीर्थख्यभिक्षून् ।**

**सत्यप्रज्ञं प्राज्ञतीर्थं यतीन्द्रं**

**क्रमात् शिष्यान् अच्युतप्रज्ञमध्वौ"** इति गुरुपरम्परा ।

अस्याम् परम्परायां ब्रह्मणः मानसपुत्राः सनकादयः मुनयः प्रधानाः । एते ब्रह्मचारिणः । षोडशस्त्रीसहस्रेशं श्रीकृष्णं पूजयितुं कृतसङ्कल्पाः प्रतिदिनं आगमिष्यन्ति । अत एव एतेषां अवसरः अयम् । तस्मिन् समये पर्यायश्रीपादाः गर्भगृहात् स्वल्पकालं बहिरागच्छन्ति । तदा सनकादयः श्रीकृष्णपूजां कुर्वन्ति । अनन्तरं पर्यायश्रीपादा पुनः गर्भगृहं प्रविश्य नैवेद्यं समर्प्य अर्चयन्ति ।

**10. महापूजा**

श्रीकृष्णस्य महापूजां पर्यायश्रीपादाः एव कुर्वन्ति । तेषु श्रीमध्वाचार्यः सन्निहितो भूत्वा महापूजां समर्पयन्ति । तस्मिन् काले विद्वज्जनाः श्रीविष्णुसहस्रनामस्तोत्रं पठन्ति । धूप-दीपं समर्प्य महानैवेद्यं कुर्वन्ति । अन्नब्रह्माय श्रीकृष्णाय भक्ष-भोज्य-चोष्य-लेह्यस्वरूपान् नानाविधपदार्थान् निवेदयन्ति । एतस्मिन्नेव अवसरे श्रीपादाः ध्यानम् आचरन्ति । ततः नैवेद्यं विसृज्य महापूजां विधास्यन्ति ।

**"मुखवासश्च ताम्बूलं दर्पणं छत्रचामरे ।**

**पादुके चेति विज्ञेया उपचाराः परे बुधैः"** इति उपचारान् समर्पयन्ति ।

भगवत्समर्पितमहानैवेद्यम् मुख्यप्राणाय-श्रीमध्वाचार्याय नैवेद्यं निवेद्य श्रीचन्द्रमौळीश्वरं श्रीअनन्तेश्वरं च पूजयन्ति । गरुडाय-भागीरथ्यै च नैवेद्यं निवेदयन्ति । वृन्दावनस्थान् गुरून् संपूज्य सर्वज्ञपीठं आगमिष्यन्ति । तत्र सिंहासने उपविश्य भक्तेभ्यः तीर्थं प्रयच्छन्ति । सर्वेभ्यः प्रसादं प्रयच्छन्ति । प्रतिदिनं सहस्राधिकानां यात्रिकानां भोजनव्यवस्था भवति ।

**"अहम् वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**

**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्"** ॥ इति श्रीकृष्णस्य वचनम् । तदनुगुणं अत्र अन्नसन्तर्पणं भवति । एवं प्रकारेण मध्याह्नपूजा समर्पिता भवति ।

**11.चामरसेवापूजा**

सायं स्नात्वा श्रीपादाः जपानुष्ठानं आचरन्ति । परिचारकाः तीर्थमण्टपे उत्सवविग्रहं अलङ्कृत्य स्थापयन्ति । देवस्य पार्श्वद्वयोः शताधिकदीपान् प्रज्वलन्ति । तत्र श्रीपादाः आगत्य श्रीविष्णुसहस्रनामपठणपूर्वकं सुवर्णालङ्कृतचामरेण चामरसेवां समर्पयन्ति । तत्र पञ्चोपचारपूजां विधाय महार्तिक्यं समर्पयन्ति ।

**12. रात्रिपूजा**

चामरसेवां समर्प्य श्रीपादाः गर्भगृहं प्रविशन्ति । श्रीकृष्णाष्टोत्तरशतनामस्तोत्रपठनपूर्वकं पुष्पार्चनं विधाय नैवेद्यं समर्प्य आर्तिक्यं विधास्यन्ति । ततः लयबद्धां मनोहरां सङ्कीर्तसेवां परिवारजनाः समाचरन्ति । तस्मिन्नेव समये श्रीमुख्यप्राणाय रङ्गपूजां श्रीपादाः समर्पयन्ति ।

**13. मण्टपपूजा–अष्टावधानपूजा**

देवाधिदेवस्य श्रीकृष्णस्य डोलोत्सवसेवां विधातुं तीर्थमण्टपे सुवर्णडोलां अलङ्कुर्वन्ति । तदा वेदज्ञाः अष्टावधानसेवां समर्पयन्ति । अत्रैव सेवाकर्तारः गुरुपूजां कुर्वन्ति ।

## 14. एकान्तसेवा–शयनोत्सवपूजा

श्रीकृष्णस्य गर्भगृहे एव अयं कार्यक्रमः प्रचलति । श्रीपादाः निद्रादिदोषदूराय भगवते एकान्तसेवां समर्पयन्ति । एवं प्रतिदिनं चतुर्दशलोकाधिपतये श्रीकृष्णाय चतुर्दशपूजा भवति ।

अत्र अयं विशेषविचारः । चातुर्मास्यकाले रात्रौ रथमार्गे उत्सवः न भवति । उत्थानद्वादशितः भागीरथीजयन्तिपर्यन्तं [वैशाखमासः]उत्सवः सम्भवति । अत एव श्रीकृष्णाष्टमी निमित्तम् मृण्मयविग्रहं कारयित्वा उत्सवं कुर्वन्ति ।

## 15. सप्तोत्सवः

श्रीमध्वाचार्यः मकरसङ्क्रमणपुण्यकाले श्रीकृष्णम् प्रतिष्ठापयामास । अतः प्रतिवर्षं तस्मिन् काले महता वैभवेन वार्षिकोत्सवः प्रभवति । तस्य उत्सवस्य नाम "सप्तोत्सवः" इति । आहत्य सप्तदिनपर्यन्तम् प्रचलति । प्रतिदिनं सायं राजाङ्गणे धार्मिकोपन्यासः सांस्कृतिककार्यक्रमाश्च भवन्ति । तथैव सायं गर्भगृहे रात्रिपूजां कृत्वा मध्वसरोवरे तेप्पोत्सवं आचरन्ति । ततः रथमार्गे रथोत्सवः । षष्ठदिने सायं प्रधानोत्सवः । मकरसङ्क्रमणकालः । तदा रथत्रयस्योत्सवः भवति । तत्र एकः रथः महापूजारथः । तस्मिन् मुख्यप्राणःआञ्जनेयः उपविशति । द्वितीयः रथः गरुडरथः । तस्मिन् श्रीअनन्तेष्वर–चन्द्रेश्वतौ उपविशतः । तृतीयः रथः ब्रह्मरथः । तत्र श्रीकृष्णः उपविशति । पर्यायश्रीपादः अष्टमठाधीशाश्च उपस्थिताः भवन्ति । "रथस्थं केशवं दृष्ट्वा पुनर्जन्म न विद्यते" इनि वचनं रथारूढस्य भगवतः दर्शनमहिमां वर्णयति । रथस्थाय श्रीकृष्णाय नैवेद्यं समर्प्य आर्तिक्यं निवेदयन्ति । ततः उत्सवप्रारम्भः । तं उत्सवं द्रष्टुं जनसम्मर्दः भवति । श्रीपुत्तिगे मठ–भण्डारकेरिमठयोः मध्यभागे त्रयो रथाः तिष्ठन्ति ।

नयनानन्दकरो भवति । रजतपीठस्य अयमेव प्रधानोत्सवः । ततः वसन्तमण्टपे अष्टावधानसेवा प्रचलति । उत्सवस्य अन्तिमदिने प्रभाते श्रीकृष्णाय महापूजापर्यन्तम् पूजाम् समर्पयन्ति । सामान्यतः नववादने रथमार्गे दिवाउत्सवः भवति । ब्रह्मरथे श्रीकृष्णं मुख्यप्राणञ्च स्थापयन्ति । चूर्णोत्सवः इति उत्सवस्य नाम । विविधानि फलानि निवेद्य भक्तेभ्यः रथात् वितरन्ति । भक्ताः अपि पावनप्रसादं स्वीकर्तुं अत्युत्साहेन सिद्धाः भवन्ति । ततः उत्सवं कृत्वा वसन्तमण्टपे वसन्तोत्सवं कुर्वन्ति । तत्रैव ओकुळी भवति । श्रीपादाः उत्सवमूर्तिं स्वीकृत्य मध्वसरोवरं आगमिष्यन्ति । तत्र अवभृतोत्सवं कुर्वन्ति । श्रीकृष्ण–मुख्यप्राणेन–श्रीपादैः सह सहस्राधिकाः सज्जनाः स्नानं कुर्वन्ति । मध्याह्ने महान्नसन्तर्पणं भवति । एवं श्रीकृष्णप्रतिष्ठापनदिनोत्सवः सप्तदिनानि भवन्ति ।

## रथोत्सवः

अस्मिन् सन्निधाने वैविध्यमयाः रथोत्सवाः भवन्ति ।

**1. सामान्यरथोत्सवः 2. सुवर्णपालकि उत्सवः 3. गरुडोत्सवः**

**4. रजतरथोत्सवः 5. नवतन्तरथोत्सवः 6. सुवर्णरथोत्सवः 7. ब्रह्मरथोत्सवः**

### 16 पर्यायमहोत्सवः

श्रीकृष्णस्य सन्निधाने अष्टयतयः पूजां कुर्वन्ति । तत्र मध्याह्नकालीनमहापूजां पर्यायश्रीपादाः एव कुर्वन्ति । कारणन्तु प्रतिदिनं श्रीमध्वाचार्यः पर्यायश्रीपादेषु सन्निहितस्सन् महापूजां कुर्वन्ति । एषु श्रीपादेषु पर्यायदीक्षा क्रमशः एकैकस्य मासद्वयं यावत् भूयात् इति पूर्वं श्रीमध्वाचार्यः नियमं अकरोत् । एवं वर्षशतत्रयं अयं नियमः प्राचलत् । ततः श्रीसोदेमठाधीशः श्रीवादिराजतीर्थः मासद्वयम् वर्षद्वम् इति परिवर्तनं चकार ।

**मासद्वितयपर्यायपूजां मध्वप्रकल्पिताम् ।**

**वर्षद्वितयपर्यन्ताम् कल्पयामास सन्मतिः ॥**

**कल्पयामास सञ्चारे सौकर्यं यतिनां ततः ।**

**तथा प्रत्येकमष्टानां यतीनां निर्मिमे मठम् ॥**

**ततः प्रभृति श्रीकृष्णपर्यायमहसंभ्रमः ।**

**अत्यन्तकौतुकोत्साहहेतुः सम्यग् विजृम्भते** ॥ [वा.गु.च.4.49–51] इति

वर्षद्वयं पर्यायाधिकारः तन्मठस्य इति नियमम् चकार । एतेन् नियमेन श्रीपादाः सर्वे वर्षद्वयं पर्यायदीक्षां स्वीकृत्य श्रीकृष्णपूजां कुर्वन्ति । वर्षद्वयानन्तरम् चतुर्दशवर्षपर्यन्तं सञ्चारं कृत्वा तत्वप्रचारं करिष्यन्ति ।

जनेवरी अष्टादशदिने [18] पर्यायोत्सवः सम्भवति । वर्षद्वयानन्तरं पुनः जनवरी अष्टादशदिने पर्यायोत्सवः भवति । तद्दिने प्रभाते त्रिवादने भाविपर्यायश्रीपादः कापुसमीपस्थे दण्डतीर्थे स्नात्वा पुरप्रवेशं करोति । तदा पौरजनाः श्रद्धया स्वागतं व्याहरन्ति । उडुपि जोडुकट्टे इति प्रदेशतः वैभवशोभायात्रा प्रवर्तते । वैविध्यमयछद्मवेषधारिणः नयनानन्दं कुर्वन्ति । मार्गे अष्टमठाधीशाः अलङ्कृतवाहनेषु आगमिष्यन्ति । उत्सवं द्रष्टुं लक्षाधिकाः जनाः निद्रां त्यक्त्वा उपस्थिताः भवन्ति । यदा रथमार्गः आगमिष्यति तदा श्रीपादाः सर्वे वाहनेभ्यः अवतीर्य पादयात्रया आगमिष्यन्ति । रथमार्गे वाहनद्वारा न आगन्तव्यं इति नियमः । भगवान् एकः एव वाहनात् [रथात्] आगमिष्यति । ततः श्रीचन्द्रेश्वरम्–श्रीअनन्तेश्वरं अभिवन्द्य श्रीकृष्णमठं प्रविशन्ति । तदा प्रसक्तपर्यायश्रीपादः भाविपर्यायश्रीपादाय स्वागतं व्याहरति । श्रीकृष्णसन्दर्शनं कृत्वा श्रीकृष्णस्य श्रीमध्वाचार्यस्य पुरतः अधिकारहस्तान्तरप्रक्रियां विधास्यन्ति । अक्षयपात्रं यच्छन्ति । सैव अधिकारहस्तान्तरप्रक्रिया ।

तां समाप्य सर्वज्ञसिंहासने उपविशन्ति । एवं प्रधानकार्यक्रमं कृत्वा राजाङ्गणे वर्षद्वयस्य मन्त्रिमण्डलम् योजनानाञ्च स्वरूपम् प्रकटयन्ति । इदानीं उडुपिपर्यायोत्सवः विश्वविख्यातः अभवत् । अस्मिन् उत्सवे राष्ट्रीयनेतारः राज्यनायकाः अगमिष्यन्ति । विविधक्षेत्रस्य प्रधानार्चकाः देवप्रसादं पर्यायश्रीपादाय समर्पयन्ति । पर्यायोत्सवनिमित्तं सर्वकारस्य विशेषानुदानेन उडुपिनगरम् अलङ्कुर्वन्ति । पर्यायोत्सवनिमित्तम् आहत्य दशदिनोत्सवः भवति । यात्रार्थिनः अधिकसङ्ख्यया आगमिष्यन्ति । अत एव श्रीवादिराजश्रीपादाः तीर्थप्रबन्धे **"तद्द्रजतपीठपुरं गरीयः"** इति वर्णयामास ।

## श्रीमध्वप्रतिष्ठापिताः मठाः

श्रीमध्वाचार्यस्य अन्तेवासिनः बहवः नानादेशसम्भवाः यतीन्द्राः शिष्याः आसन् । मध्वप्रशिष्याः बहवः तपोज्ञानभक्तिवैराग्यादिसद्गुणभूषणाः सर्वेऽपि पृथ्वीं सम्यक् अलञ्चक्रुः । एते सर्वे सकलसच्छास्त्रव्याख्यासौख्यामृताब्धिगाः दुर्वादिदुर्वादकाण्डखण्डनमण्डनाः आसन् । तेषु सम्प्रदायप्रवर्तकाः नव यतीन्द्राः अभवन् । सर्वे श्रीमध्वाचार्यस्य परमानुग्रहभाजः ।

पूर्वं शिष्यस्वीकारक्रमः विशिष्टः आसीत् । गुरूणां सन्निधाने अनेकभगवन्मूर्तयः आसन् । तत्र मनसा भगवन्तं संप्रार्थ्य कुसुमानि गृहीत्वा देवस्योपरि समर्पयन्ति । यस्य मूर्तेः उपरि पुष्पम् पतति तस्य नामैव शिष्याय ददाति स्म ।

**"देवस्य प्रमुखं कृत्वा ततः पुष्पाणि मोचयेत् ।**

**पुष्पं निपतितं यत्र मूर्धा देवस्य शार्ङ्गिणः । तन्नाम कारयेत् तस्य..."** इति गरुडपुराणे निरूपितम् । ते च श्रीहृषीकेशतीर्थः–श्रीजनार्दनतीर्थः–श्रीनरहरितीर्थः–श्रीउपेन्द्रतीर्थः–श्रीवामनतीर्थः–श्रीविष्णुतीर्थः–श्रीरामतीर्थः–श्रीअधोक्षजतीर्थः–श्रीपद्मनाभतीर्थः–श्रीसत्यतीर्थः इति ।

**"वशीकृतहृषीकाश्च जननाद्युपमर्दिनः ।**

**नरसिंहपदाधाराः अभ्यस्तोपेन्द्रनामकाः** ॥ [मध्व.15.128] इति अष्टयतीनां विवरणं काव्ये प्रदत्तम् । एतेषां एतानि नामानि तत्तद्गुणयोगैरेव वर्तन्ते इति सूचयितुं ग्रन्थे तत्तद्गुणकथनपूर्वकं नामानि कथितानि ।

**अदीर्घान्याभिधानाः ये श्रीमद्रामपदाश्रयाः ।**

**अप्रत्यक्षगुणोद्रिक्ताः भक्तिवैराग्यसागराः** ॥ [मध्व.15.129] इति अदीर्घान्याभिधानाः इत्यनेन श्रीवामनतीर्थः, श्रीमद्रामपदाश्रयाः इत्यनेन श्रीरामतीर्थः, अप्रत्यक्षगुणोद्रिक्ताः इत्यनेन अधोक्षजतीर्थः स्मर्यते । भक्तिवैराग्यसागराः इत्यनेन अन्ये यतयः सूचिताः ।

तथैव सम्प्रदायवादिनः –

**"वन्दे हृषीकेशमथो नृसिंहं**

**जनार्दनं चिन्तय धीरुपेन्द्रम् ।**

**श्रीवामनं संस्मर विष्णुमेव**

**श्रीराममञ्चेऽहमधोक्षजं च"** इति पठन्ति ।

ते च सर्वे ज्ञानभास्कराः सच्छास्त्रव्याख्यानेन सकलसद्गुणपूर्णं भगवन्तं प्रदर्शयामासुः । सर्वेऽपि प्रणवोपासकाः वेदान्तशास्त्रसेवया नित्यनिर्वृताः आसन् । एभ्यः श्रीमध्वाचार्यः सानुग्रहं चारुतरां हरेः प्रतिमां ददौ ।

सम्प्रदायवादिनस्तु –

**“रघुपौ काळियमथनौ सुविट्ठलौ सूकरं नृसिंहं च ।**

**अन्यं विट्ठलमगणितमतिशिष्यैः पूजितान् नमामि सदा”** इति अस्तुवन् ।

श्रीमध्वाचार्यः भगवतः श्रीकृष्णस्य अविच्छिन्नपूजादिनिमित्तं श्रीकृष्णतत्वप्रचारार्थं च अष्टौ शुद्धान् बालयतीन् स्वीचकार । तेषु अष्टयतिषु द्वन्द्वपद्धतिं आदिदेश । श्रीहृषीकेशतीर्थाः सम्प्रदायपद्धत्यां “तेषां मन्त्रोपदेशव्रतनियमसुरार्चादिके सम्प्रदायं युग्मे युग्मे प्रभिन्नं कुरुत इति हृषीकेशतीर्थादिकेषु” ॥ इति वर्णितवन्तः । ` द्वन्द्वमठव्यवस्थां कृत्वा मासद्वयं यावत् एकमठस्य पूजाधिकारः [पर्यायः] इति नियमं चकार । तत्र तेषां मठानां विवरणं एव वर्तते ।

| | | |
|---|---|---|
| 1. श्रीहृषीकेशतीर्थः | श्रीपलिमारुमठः | प्रथमद्वन्द्वमठः |
| 2 श्रीनरसिंहतीर्थः | श्रीअदमारुमठः | |
| 3. श्रीजनार्दनतीर्थः | श्रीकृष्णापुरमठः | द्वितीयद्वन्द्वमठः |
| 4. श्रीउपेन्द्रतीर्थः | श्रीपुत्तिगेमठः | |
| 5. श्रीवामनतीर्थः | श्रीशीरूरुमठः | तृतीयद्वन्द्वमठः |
| 6. श्रीविष्णुतीर्थः | श्रीसोदेमठः | |
| 7. श्रीरामतीर्थः | श्रीकाणियूरुमठः | चतुर्थद्वन्द्वमठः |
| 8. श्रीअधोक्षजमठः | श्रीपेजावरमठः | |

**[1] श्रीपलिमारुमठः**

अस्य मठस्य मूलयतिः वशीकृतहृषीकः श्रीहृषीकेशतीर्थः । **"वशीकृतहृषीकाश्च" "अनुकूलगुणस्वरादिभाजः"** इति मध्वविजये श्रीहृषेकेशतीर्थं अवर्णयत् । अयमेव महाभागः सर्वमूलग्रन्थं लिखितवान् । इदानीमपि तद्ग्रन्थः श्रीपलिमारुमठे वर्तते । अस्मै श्रीमध्वाचार्यः लक्ष्मण–सीतासमेतं श्रीकोदण्डरामं अदात् । रामलक्ष्मणौ धनुर्धारिणौ । सीता कमलपाणिनी ।

श्रीमध्वाचार्यः श्रीकृष्णाराधनतत्परान् अष्टौ शिष्यान् स्वीचकार ते सर्वे सन्न्यासिनः । प्रणवोपासकाः । अत एव तेभ्यः प्रणवप्रतिपाद्यान् राम–कृष्ण–नरसिंह–वराह इत्यादीन् भगवद्विग्रहान् अदात् । एते जय–विजयशापविमोचनार्थं अवातरन् । तदेवं क्रमेण श्रीहृषेकेशतीर्थाय श्रीरामं ददौ । अस्यां परम्परायां सर्वे श्रीरामोपासकाः अभवन् । मठस्य नामाङ्कणे मुद्रायाञ्च "श्रीरामश्री" इत्यभवत् । अयं मठः रथमार्गे पश्चिमदिशि कनकमार्गस्य पार्श्वे वर्तते ।

गुरुपरम्परा – [1] श्रीहृषीकेशतीर्थः [2] श्रीसमात्मेशतीर्थः [3] श्रीसम्भवतीर्थः [4] श्रीअपराजिततीर्थः [5] श्रीविद्यामूर्तितीर्थः [6] श्रीराजराजेश्वरतीर्थः [7] श्रीनिधितीर्थः [8] श्रीविद्येशतीर्थः [9] श्रीवल्लभतीर्थः [10] श्रीजगद्भूषणतीर्थः [11] श्रीरामचन्द्रतीर्थः [12] श्रीविद्यानिधितीर्थः [13] श्रीसुरेशतीर्थः [14] श्रीराघवेन्द्रतीर्थः [15] श्रीरघुनन्दनतीर्थः [16] श्रीविद्यापतितीर्थः [17] श्रीरघुपतितीर्थः [18] श्रीरघूत्तमतीर्थः [19] श्रीरामभद्रतीर्थः [20] श्रीरघुवर्यतीर्थः [21] श्रीरघुपुङ्गवतीर्थः [22] श्रीरघुवरतीर्थः [23] श्रीरघुप्रवीरतीर्थः [24] श्रीरघुभूषणतीर्थः [26] श्रीरघुरत्नतीर्थः [27] श्रीरघुप्रियतीर्थः

[28] श्रीरघुमान्यतीर्थः [29] श्रीविद्यामान्यतीर्थः [30] श्रीविद्याधीशतीर्थः [अधुना विराजमानः] इति त्रिंशद् यतिवरेण्याः।

**[2] श्रीअदमारुमठः**

अस्य मठस्य प्रथमयतिः श्रीनरसिंहतीर्थः । **“नरसिंहपदाधाराः”** इति मध्वविजये वर्णितम् । अस्मै श्रीमध्वाचार्यः चतुर्भुजकालीयमर्दनश्रीकृष्णं ददौ । श्रीनरसिंहतीर्थ एव श्रीनरहरितीर्थः इति श्रीनारायणपण्डिताचार्यः भावप्रकाशिकायां सूचितवान् । श्रीकृष्णः चतुर्भुजस्सन् भुजद्वये शङ्ख–चक्रौ धृत्वा भुजद्वयेन अभयं सूचयन् नर्तनस्थितौ वर्तते । गीतनृत्यादिकलायां निपुणः श्रीनरहरितीर्थः नर्तनकृष्णं आराधयामास । अयं मठः रथमार्गे आग्नेयकोणे वर्तते ।

गुरुपरम्परा –

[1] श्रीनरसिंहतीर्थः [2] श्रीकमलेक्षणतीर्थः [3] श्रीरामचन्द्रतीर्थः [4] श्रीविद्याधीशतीर्थः [5] श्रीविश्वपतितीर्थः [6] श्रीविश्वेशतीर्थः [7] श्रीवेदनिधितीर्थः [8] श्रीवेदराजतीर्थः [9] श्रीविद्यामूर्तितीर्थः [10] श्रीवैकुण्ठराजतीर्थः [11] श्रीविश्वराजतीर्थः [12] श्रीवेदगर्भतीर्थः [13] श्रीहिरण्यगर्भतीर्थः [14] श्रीविश्वाधीशतीर्थः [15] श्रीविश्ववल्लभतीर्थः [16] श्रीविश्वेन्द्रतीर्थः [17] श्रीवेदनिधितीर्थः [18] श्रीवादीन्द्रतीर्थः [19] श्रीविद्यापतितीर्थः [20] श्रीविबुधपतितीर्थः [21] श्रीवेदवल्लभतीर्थः [22] श्रीवेदवंद्यतीर्थः [23] श्रीविद्येशतीर्थः [24] श्रीविबुधवल्लभतीर्थः [25] श्रीविबुधवन्द्यतीर्थः [26] श्रीविबुधवर्यतीर्थः [27] श्रीविबुधेन्द्रतीर्थः [28] श्रीविबुधाधिराजतीर्थः [29] श्रीविबुधप्रियतीर्थः [30] श्रीविबुधमान्यतीर्थः [31] श्रीविबुधेशतीर्थः [32] श्रीविश्वप्रियतीर्थः [अधुना विराजमानः].

एवं द्वात्रिंशत् संख्याकाः यतयः अस्य मठस्य ।

### [3] श्रीकृष्णापुरमठः

अस्य मठस्य मूलपुरुषः श्रीजनार्दनतीर्थः । **"जननाद्युपमर्दिनः"** इति मध्वविजये वर्णयामास । अस्मै श्रीमध्वाचार्यः द्विभुजकालियमर्दनश्रीकृष्णं अदात् । नागस्योपरि नर्तनं कुर्वन् वर्तते । एकेन हस्तेन सर्पस्य पुच्छं धृत्वा मर्दनं कुर्वन् अन्येन हस्तेन अभयं सूचयन् विराजते । श्रीजनार्दनतीर्थस्य प्रार्थनया उग्रनरसिंहविग्रहञ्च अदात् । "श्रीजनार्द्दनकृष्णपीठम्" इति अस्य संस्थानस्य नाम । अयं मठः रथमार्गे उत्तरदिशि वर्तते ।

गुरुपरम्परा –

[1] श्रीजनार्दनतीर्थः [2] श्रीवत्सांकतीर्थः [3] श्रीवागीशतीर्थः [4] श्रीलोकेशतीर्थः [5] श्रीलोकनाथतीर्थः [6] श्रीलोकप्रियतीर्थः [7] श्रीविद्याधिराजतीर्थः [8] श्रीविश्वाधिराजतीर्थः [9] श्रीविश्वाधीशतीर्थः [10] श्रीविश्वेशतीर्थः [11] श्रीविश्ववन्द्यतीर्थः [12] श्रीविश्वराजतीर्थः [13] श्रीधरणीधरतीर्थः [14] श्रीधराधरतीर्थः [15] श्रीप्राज्ञमूर्तितीर्थः [16] श्रीतपोमूर्तितीर्थः [17] श्रीसुरेश्वरतीर्थः [18] श्रीजगन्नाथतीर्थः [19] श्रीसुरेशतीर्थः [20] श्रीविश्वपुङ्गवतीर्थः [21] श्रीविश्ववल्लभतीर्थः [22] श्रीविश्वभूषणतीर्थः [23] श्रीयादवेन्द्रतीर्थः [24] श्रीप्राज्ञमूर्तितीर्थः [25] श्रीविद्याधिराजतीर्थः [26] श्रीविद्यामूर्तितीर्थः [27] श्रीविद्यावल्लभतीर्थः [28] श्रीविद्येन्द्रतीर्थः [29] श्रीविद्यानिधितीर्थः [30] श्रीविद्यासमुद्रतीर्थः [31] श्रीविद्यापतितीर्थः [32] श्रीविद्याधीशतीर्थः [33] श्रीविद्यापूर्णतीर्थः [34] श्रीविद्यारत्नतीर्थः [35] श्रीविद्यासागरतीर्थः [अधुना विराजमानः] एते अस्य मठस्य यतयः ।

### [4] श्रीपुत्तिगेमठः

अस्य मठस्य मूलयतिः श्रीउपेन्द्रतीर्थः । **"अभ्यस्तोपेन्द्रनामकः"** इति मध्वविजये वर्णितम् । श्रीउपेन्द्रतीर्थः धीरयतिः ।अस्मै श्रीमध्वाचार्यः रुक्मिणीसत्यभामाभ्यां सहितं श्रीविठ्ठलं ददौ । श्रीमध्वाचार्यः प्रणवाक्षरप्रतिपाद्यं विठ्ठलं अदात् ।

तत्र अ–उ–मकाराः प्रणवाक्षराः । एवं त्र्यक्षरप्रतिपाद्यान् त्रीन् विठ्ठलान् त्रिभ्यः यतिभ्यः अदात् । "अन्नब्रह्म–काञ्चनब्रह्म–नादब्रह्म" इत्यनुसन्धानेन अ इति अर्थविठ्ठलः । उ इति उदरविठ्ठलः । म इति मन्त्रविठ्ठलः । तत्र उ विठ्ठलं श्रीमदुपेन्द्रतीर्थाय अदात् । अत एव अस्य संस्थानस्य नाम उपेन्द्रविठ्ठलसंस्थानम् इति । संस्थानदेवस्य "उपेन्द्रविठ्ठलः" इति प्रसिद्धः । कटिबद्धकरौ विराजते विठ्ठलः । वामे करे शङ्खम्, दक्षिणे करे अभयमुद्रां धरन् मन्दहासेन विराजते । वरप्रदः विठ्ठलः इत्यपि वर्णयन्ति । अयं मठः रथमार्गे दक्षिणदिशि श्रीसोदे मठस्य पार्श्वे अस्ति ।

गुरुपरम्परा –

[1] श्रीउपेन्द्रतीर्थः [2] श्रीकवीन्द्रतीर्थः [3] श्रीहंसेन्द्रतीर्थः [4] श्रीयादवेन्द्रतीर्थः [5] श्रीधरणीधरतीर्थः [6] श्रीदामोदरतीर्थः [7] श्रीरघुनाथतीर्थः [8] श्रीवत्सांकतीर्थः [9] श्रीगोपीनाथतीर्थः [10] श्रीरङ्गनाथतीर्थः [11] श्रीलोकनाथतीर्थः [12] श्रीरमानाथतीर्थः [13] श्रीवल्लभतीर्थः [14] श्रीनिवासतीर्थः [15] श्रीनिधितीर्थः [16] श्रीगुणनिधितीर्थः [17] श्रीआनन्दनिधितीर्थः [18] श्रीतपोनिधितीर्थः [19] श्रीयादवेन्द्रतीर्थः [20] श्रीकवीन्द्रतीर्थः [21] श्रीराघवेन्द्रतीर्थः

[22] श्रीविबुधेन्द्रतीर्थः [23] श्रीसुरेन्द्रतीर्थः [24] श्रीभुवनेन्द्रतीर्थः [25] श्रीयोगीन्द्रतीर्थः [26] श्रीसुमतीन्द्रतीर्थः [27] श्रीसुधीन्द्रतीर्थः [28] श्रीसुज्ञानेन्द्रतीर्थः [29] श्रीसुगुणेन्द्रतीर्थः [अधुना विराजमानः] एवं एकोनत्रिंशत् संख्याकाः यतयः ।

**[5] श्रीशीरूरुमठः**

अस्य मठस्य मूलयतिः श्रीवामनतीर्थः । अस्मै श्रीमध्वाचार्यःश्रीभूसहितं विठ्ठलं अदात् । श्रीविठ्ठलः वैराग्यमुद्रया विराजते । श्रीविठ्ठलोपासनेन “श्रीवामनविठ्ठलपीठम्” इति श्रीशीरूरुमठस्य नाम अभवत् । रथमार्गे उत्तरदिशि कनकदासविग्रहस्य पुरतः वर्तते ।

गुरुपरम्परा –

[1] श्रीवामनतीर्थः [2] श्रीवासुदेवतीर्थः [3] श्रीपुण्यश्लोकतीर्थः [4] श्रीवेदगम्यतीर्थः [5] श्रीवेदव्यासतीर्थः [6] श्रीवेदवेद्यतीर्थः [7] श्रीमहेशतीर्थः [8] श्रीकृष्णतीर्थः [9] श्रीराघवतीर्थः [10] श्रीसुरेशतीर्थः [11] श्रीवेदभूषणतीर्थः [12] श्रीश्रीनिवासतीर्थः [13] श्रीवेदनिधितीर्थः [14] श्रीश्रीधरतीर्थः [15] श्रीयादवोत्तमतीर्थः [16] श्रीलक्ष्मीनारायणतीर्थः [17] श्रीविश्वभूषणतीर्थः [18] श्रीत्रैलोक्यपावनतीर्थः [19] श्रीलक्ष्मीकान्ततीर्थः [20] श्रीलक्ष्मीनारायणतीर्थः [21] श्रीलक्ष्मीपतितीर्थः [22] श्रीलक्ष्मीधरतीर्थः [23] श्रीलक्ष्मीरमणतीर्थः [24] श्रीलक्ष्मीमनोहरतीर्थः [25] श्रीलक्ष्मीप्रियतीर्थः [26] श्रीलक्ष्मीवल्लभतीर्थः [27] श्रीलक्ष्मीसमुद्रतीर्थः [28] श्रीलक्ष्मीन्द्रतीर्थः [29] श्रीलक्ष्मीवरतीर्थः । एवं एकोनत्रिंशत् संख्याकाः यतयः ।

### [6] श्रीसोदे वादिराजमठः

अस्य मठस्य मूलपुरुषः श्रीविष्णुतीर्थः । श्रीमध्वाचार्यस्य अनुजः । असौ मध्वानुजः पाजके पितुः समीपे आसीत् । पित्रोः शुश्रूषणाय निरतः श्रीमध्वाचार्यस्य परमानुग्रहं अवाप । एकदा पितरौ वैकुण्ठं ययुतुः । तयोः सद्गतिप्रदम् [1..]और्ध्वदेहिकं कार्यं शास्त्रोक्तविधानेन चकार । विधिभ्रूविलासेन धान्यादिसम्पदः नष्टाः । तदा अयम् श्रीमध्वाचार्यस्य अन्तिकमागत्य पारिव्राज्यं प्रार्थयामास । तद्वचनं श्रुत्वा श्रीमध्वाचार्यः इदानीं मास्तु । भगवत्प्रेरणया भवतु इति आदिश्य स्वभवनम् प्रेशयायामास ।

**"पारिव्राज्यम् प्रार्थयन्तं पादानम्रमिमं मुहुः ।**

**समयापेक्षयोर्वीक्षो गमयामास धाम तम्** ॥ [मध्व.15.93] इति ।

कालानन्तरे श्रीमध्वाचार्यः कृतपितृक्रियं विरक्तं विरहार्दितं अनुजम् दृष्ट्वा यत्याश्रमं व्यधात् । "श्रीविष्णुतीर्थः" नाम चकार ।

**प्रेमामृतप्रसन्नास्यस्मिताङ्गापाङ्गपूर्वकम् ।**

**श्रीविष्णुतीर्थनामास्मै प्रीतितीर्थः प्रदत्तवान्** ॥ [मध्व.15.98] इति ।

अस्मै भूवराहं अदात् । श्रीविष्णुतीर्थः महान् तपस्वी । श्रीमध्वाचार्यस्य अतीवप्रीतिपात्रः आसीत् । हरिश्चन्द्रपर्वते तपः कर्तुं अगमत् ।

**"कृत्स्नज्ञं कृपया स्वेषु सम्प्राप्तम् मेनिरे प्रजाः"** [मध्व.15.116] उभावपि सादृश्यमासीत् । पञ्चगव्यप्राशनं बिल्वपत्रभक्षणं कृत्वा तपस्तेपे । तपसः प्रभावेण गुरोः श्रीमध्वाचार्यस्य परमानुग्रहेण मन्त्राणां सिद्धिं प्राप ।

**अहो महाबोधसेवामहिमाऽस्मिन् युगे यतः ।**

**धन्योऽसौ सिद्धिमापेमां सोऽमरैरित्यलाल्यत** ॥ [मध्व.15.114] इति देवाः शशंसुः ।

तथैव श्रीवेदव्यासतीर्थः श्रीमध्वाचार्यस्य प्रियशिष्यः । श्रीबादरायणतीर्थः इत्यपि नामान्तरम् ।

**कवीन्द्रतिलको विद्वच्छेखरस्तापसाग्रणीः ।**

**मध्वकेलीशुकोऽस्याभूच्छिष्यो व्यासपदाश्रयः** ॥ [मध्व.15.117] इति श्रीवेदव्यासतीर्थः मध्वप्रियशिष्य : आसीत् । एवं श्रीसोदेमठे उभावपि मध्वशिष्यौ ।

अस्मै प्रणवप्रतिपाद्यं चतुर्थं रूपं श्रीवराहं अदात् । अस्मिन् विग्रहे भूदेवी उरुप्रदेशे उपविष्टा वर्तते । रथमार्गे आग्नेयकोणे अयं मठः वर्तते ।

गुरुपरम्परा –

[1] श्रीविष्णुतीर्थः [2] श्रीवेदव्यासतीर्थः [3] श्रीवेदवेद्यतीर्थः [4] श्रीवेदगर्भतीर्थः [5] श्रीवरेशतीर्थः [6] श्रीवामनतीर्थः [7] श्रीवासुदेवतीर्थः [8] श्रीवेदव्यासतीर्थः [9] श्रीवराहतीर्थः [10] श्रीवेदात्मतीर्थः [11] श्रीविश्ववन्द्यतीर्थः [12] श्रीरत्नगर्भतीर्थः [13] श्रीवेदाङ्गतीर्थः [14] श्रीविद्यापतितीर्थः [15] श्रीविश्ववन्द्यतीर्थः [16] श्रीविश्वतीर्थः [17] श्रीविठ्ठलतीर्थः [18] श्रीवरदराजतीर्थः [19] श्रीवागीशतीर्थः [20] श्रीवादिराजतीर्थः [21] श्रीवेदवेद्यतीर्थः [22] श्रीविद्यानिधितीर्थः [23] श्रीवेदनिधितीर्थः [24] श्रीवरदराजतीर्थः [25] श्रीविश्वाधिराजेन्द्रतीर्थः [26] श्रीवादिवन्द्यतीर्थः [27] श्रीविबुधवर्यतीर्थः [28] श्रीविश्वनिधितीर्थः [29] श्रीविश्वाधीशतीर्थः [30] श्रीविश्वेशतीर्थः [31] श्रीविश्वप्रियतीर्थः [32] श्रीविश्वाधीशतीर्थः [33] श्रीविश्वेन्द्रतीर्थः [34] श्रीविश्वोत्तमतीर्थः [35] श्रीविश्ववल्लभतीर्थः[अधुना विराजमानः] एवं पञ्चत्रिंशत् संख्याकाः यतयः ।

**[7] श्रीकाणियूरुमठः**

अस्य मठस्य मूलयतिः श्रीरामतीर्थः । श्रीमध्वाचार्यः अस्मै स्वस्तिकासने विराजमानं चतुर्भुजं शान्तं योगानरसिंहं अदात् । प्रणवप्रतिपाद्यः तृतीयः श्रीनरसिंहः । अत एव "श्रीरामनरसिंहपीठम्" इत्यस्य संस्थानस्य नाम । योगासने विराजमानः श्रीनरसिंहः चतुर्भुजः विराजते । द्वयोः हस्तयोः शङ्ख–चक्रौ धृत्वा द्वौ हस्तौ अङ्के स्थापयामास । योगारूढः सन् वर्तते । अयं मठः रथमार्गे प्रदक्षिणाक्रमे पूर्वदिशि प्रथमो विराजते ।

गुरुपरम्परा –

[1] श्रीरामतीर्थः [2] श्रीरघुनाथतीर्थः [3] श्रीरघुपतितीर्थः [4] श्रीरघुनन्दनतीर्थः [5] श्रीयदुनन्दनतीर्थः [6] श्रीविश्वात्मतीर्थः [7] श्रीविश्वनाथतीर्थः [8] श्रीवेदगर्भतीर्थः [9] श्रीवागीशतीर्थः [10] श्रीवरदपतितीर्थः [11] श्रीविश्वपतितीर्थः [12] श्रीविश्वमूर्तितीर्थः [13] श्रीवेदपतितीर्थः [14] श्रीवेदराजतीर्थः [15] श्रीविद्याधीशतीर्थः [16] श्रीविबुधेशतीर्थः [17] श्रीवारिजाक्षतीर्थः [18] श्रीविश्वेन्द्रतीर्थः [19] श्रीविबुधवन्द्यतीर्थः [20] श्रीविबुधादिराजतीर्थः [21] श्रीविद्याराजतीर्थः [22] श्रीविबुधप्रियतीर्थः [23] श्रीविद्यासागरतीर्थः [24] श्रीवासुदेवतीर्थः [25] श्रीविद्यापतितीर्थः [26] श्रीवामनतीर्थः [27] श्रीविद्यानिधितीर्थः [28] श्रीविद्यासमुद्रतीर्थः [29] श्रीविद्यावारिनिधितीर्थः [30] श्रीविद्यावल्लभतीर्थः [अधुना विराजमानः] एवं एते त्रिंशत् संख्याकाः यतयः अस्य मठस्य ।

### [8] श्रीपेजावरमठः

अस्य मठस्य मूलयतिः श्रीअधोक्षजतीर्थः । अस्मै श्रीमध्वाचार्यःश्रीभूसमेतं विठ्ठलं अदात् । कटिन्यस्तहस्तः अभयमुद्रां धरन् विराजते विठ्ठलः । श्रीमध्वाचार्यः अभयमुद्रां धृत्वा अनुग्रहं कुर्वन्तं श्री–भू–सहितं श्रीविठ्ठलं अदात् । श्रीकण्वमहर्षिणा आराधितः श्रीरामोऽपि अस्मिन् मठे पूज्यते । प्रणवप्रतिपाद्येषु प्रथमःअकारवाच्यः अजविठ्ठलः । अत एव अस्य संस्थानस्य नाम "श्रीअधोक्षजविठलपीठम्" इत्यभवत् । भुजद्वयेन शङ्खम् अभयमुद्राञ्च दधार । रथवीथ्यां पश्चिमभागे श्रीअदमारुमठस्य पार्श्वे अयं मठः वर्तते ।

गुरुपरम्परा –

[1] श्रीअधोक्षजतीर्थः [2] श्रीकमलाक्षतीर्थः [3] श्रीपुष्कराक्षतीर्थः [4] श्रीअमरेन्द्रतीर्थः [5] श्रीमहेन्द्रतीर्थः [6] श्रीविजयध्वजतीर्थः [7] श्रीउत्तमतीर्थः [8] श्रीचिन्तामणितीर्थः [9] श्रीदामोदरतीर्थः [10] श्रीवासुदेवतीर्थः [11] श्रीवादीन्द्रतीर्थः [12] श्रीवेदगर्भतीर्थः [13] श्रीअणुप्रज्ञतीर्थः [14] श्रीविश्वप्रज्ञतीर्थः [15] श्रीविजयतीर्थः [16] श्रीविश्वेश्वरतीर्थः [17] श्रीविश्वभूषणतीर्थः [18] श्रीविश्ववन्द्यतीर्थः [19] श्रीविद्याराजतीर्थः [20] श्रीविश्वमूर्तितीर्थः [21] श्रीविश्वपतितीर्थः [22] श्रीविश्वनिधितीर्थः [23] श्रीविश्वाधीशतीर्थः [24] श्रीविश्वाधिराजतीर्थः [25] श्रीविश्वबोधतीर्थः [26] श्रीविश्ववल्लभतीर्थः [27] श्रीविश्वप्रियतीर्थः [28] श्रीविश्ववर्यतीर्थः [29] श्रीविश्वराजतीर्थः [30] श्रीविश्वमनोहरतीर्थः [31] श्रीविश्वप्रज्ञतीर्थः [32] श्रीविश्वमान्यतीर्थः

[33] श्रीविश्वेशतीर्थः[अधुना विराजमानः ज्येष्ठयतिः] [34] श्रीविश्वप्रसन्नतीर्थः– अधुना विराजमानः] एवं श्रीपेजावरमठे चतुस्त्रिंशत् संख्याकाः यतयः विराजन्ते ।

एवं रजतपीठे अष्टमठस्य गुरुपरम्परा । एते यतयः –

**"पादैः पुनन्तः पृथिवीं दर्शयन्तो हरेः पदम् ।**

**धूतदुःसमयध्वांताः आदित्या इव गां गताः ॥** [मध्व.15.130] इति काव्योक्तदिशा आदित्या इव रेजुः । सर्वे ज्ञानसूर्याः आसन् ।

## श्रीपद्मनाभतीर्थः

नवयतीन्द्रेषु द्वितीयः शिष्यः। गोदावरिप्रदेशे तार्किकशिखामणिः शोभनभट्टः इति विद्वान् आसीत् ।

**"यस्त्रयी सकलपक्षशिक्षकः**

**तत्र संसदि वरिष्ठसंमतः ।**

**शोभनोपपदभट्टनामकः**

**पूर्णसंख्यमनमन्मुहुर्मुदा ॥** [मध्व.9.17] काव्योक्तरीत्या

असौ त्रयीसकलपक्षशिक्षकः वरिष्ठसम्मतः आसीत् । पुराणेतिहासोक्ताचारोपासने निरतः सन् श्रीमध्वकृतब्रह्मसूत्रभाष्यं अश्रुणोत् ।

**"नापरेषु रतिमाययौ क्वचित्**

**भाष्यमद्भुतमिदं स शुश्रुवान् ।**

**नारविन्दमकरन्दमाप्तवान्**

**अच्छपिच्छ इव वांछतीतरत् ॥** [मध्व.9.19]

तेन इतरशास्त्रेषु सुखं न आप्तवान् । सभासु श्रीमध्वोक्तयुक्तिभिः जनान् अतोषयत् ।

**“श्रुत्या मत्या सदा भक्त्या विरक्त्या नित्यसेवया ।**

**अस्मै प्रसन्नः प्राज्येष्ठः सद्यो विद्यां ददौ शुभाम् ॥** [मध्व.15.121]

शोभनभट्टः विशेषरूपेण श्रीमध्वाचार्यं भेजे । श्रीमध्वाचार्यः अस्मै प्रसन्नस्सन् परमात्मतत्वविद्यां अदात् । वैराग्यनिधये अस्मै सन्न्यासाश्रमं च ददौ । श्रीपद्मनाभतीर्थः इति प्रख्यातो बभूव । श्रीमध्वाचार्यः अस्मै रघुवंशशेखरं श्रीरामं अदात् । [1] श्रीपद्मनाभतीर्थः सन्न्यायरत्नावलिं टीकां चकार [2] ।

**“सन्न्यायरत्नावलिरप्युदपादि यतः शुभा ।**

**टीका पराऽनुव्याख्या या अनर्घ्या बोधसागरात्** ॥ [मध्व.15.125] । श्रीमध्वाचार्यस्य परमानुग्रहसम्पन्नः श्रीपद्मनाभतीर्थः माध्वपरम्परायां अत्यन्तादरणीयः पूज्यः । एनं सर्वे व्याख्यानकाराः अस्तुवन् [3] ।असौ श्रीउत्तरादिमठस्य मूलपुरुषः ।

श्रीमदुत्तरादिमठे गुरुपरम्परास्तोत्रं एवं वर्तते ।

**श्रीहंसं परमात्मानं विरिञ्चिं सनकादिकान् ।**
**दूर्वाससो ज्ञाननिधीन् वीन्द्रवाहनतीर्थकान् ॥**

**कैवल्यतीर्थान् ज्ञानेशान् परतीर्थान् नमाम्यहम् ।**
**सत्यप्रज्ञान् प्राज्ञतीर्थान् अन्यान् तद्वंशजानपि ॥**

**पुरैव कृष्णासिद्धान्नभुक्त्या शोभितमानसम् ।**
**अच्युतप्रेक्षतीर्थश्च मध्वार्याणाम् गुरुं भजे ॥**
**पूर्णप्रज्ञकृतं भाष्यं आदौ तद्भावपूर्वकम् ।**
**यो व्याकरोत् नमस्तस्मै पद्मनाभाख्ययोगिने ॥**

श्रीमदुत्तरादिमठस्य गुरुपरम्परा

1. श्रीपद्मनाभतीर्थः 2.श्रीनरहरितीर्थः 3. श्रीमाधवतीर्थः 4. श्रीअक्षोभ्यतीर्थः 5.श्रीजयतीर्थः 6.श्रीविद्याधिराजतीर्थः 7.श्रीकवीन्द्रतीर्थः 8.श्रीवागीशतीर्थः 9.श्रीरामचन्द्रतीर्थः 10.श्रीविद्यानिधितीर्थः 11.श्रीरघुनाथतीर्थः 12.श्रीरघुवर्यतीर्थः 13.श्रीरघूत्तमतीर्थः 14.श्रीवेदव्यासतीर्थः 15.श्रीविद्याधीशतीर्थः 16.श्रीवेदनिधितीर्थः 17.श्रीसत्यव्रततीर्थः 18.श्रीसत्यनिधितीर्थः 19.श्रीसत्यनाथतीर्थः 20.श्रीसत्याभिनवतीर्थः 21.श्रीसत्यपूर्णतीर्थः 22. श्रीसत्यविजयतीर्थः 23.श्रीसत्यप्रियतीर्थः 24.श्रीसत्यबोधतीर्थः 25.श्रीसत्यसन्धतीर्थः 26.श्रीसत्यवरतीर्थः 27.श्रीसत्यधर्मतीर्थः 28.श्रीसत्यसङ्कल्पतीर्थः 29.श्रीसत्यसन्तुष्टतीर्थः 30.श्रीसत्यपरायणतीर्थः 31.श्रीसत्यकामतीर्थः 32.श्रीसत्येष्टतीर्थः 33.श्रीसत्यपराक्रमतीर्थः 34.श्रीसत्यवीरतीर्थः 35.श्रीसत्यधीरतीर्थः 36.श्रीसत्यज्ञानतीर्थः 37.श्रीसत्यध्यानतीर्थः 38. श्रीसत्यप्रज्ञतीर्थः 39.श्रीसत्याभिज्ञतीर्थः 40.श्रीसत्यप्रमोदतीर्थः 41. श्रीसत्यात्मतीर्थः[अधुना विराजमानः]

## श्रीअच्युतप्रज्ञाचार्यः

श्रीअच्युतप्रज्ञाचार्यः श्रीमध्वाचार्यस्य आश्रमगुरुः । श्रीहंसनामकपरमात्मनः दिव्यपरम्परायां विराजमानः । अस्यां परम्परायां सनकः–सनन्दनः–सनत्कुमारः–सनस्वजातः–दूर्वासः–परतीर्थः–सत्यप्रज्ञः–प्राज्ञतीर्थ–श्रीअच्युतप्रज्ञः इति श्रीमध्वाचार्यात् पूर्वपरम्परा । अस्मिन् पीठे श्रीअच्युतप्रज्ञाचार्यः प्रसिद्धः ।

पूर्वं श्रीजगन्नाथपुर्यां आसीत् । कारणान्तरेण केरळराज्यं अगमत् । ततः गुरुणा प्राज्ञतीर्थेण प्रेरितः उडुपीं आजगाम । अत्रैव श्रीअनन्तेश्वरस्य आराधनं कुर्वन् कालं याप । स तु परमवैराग्यमूर्तिः आसीत् ।

**यतिर्यतात्मा भुवि कश्चनाभवत्**

**विभूषणो भूरिविरक्तिभूषणः ।**

**न नाममात्रात् शुचिमर्थतोऽपि यम्**

**जनोऽच्युतप्रेक्षमुदाहरत् स्फुटम्** ॥ [मध्व.4.6] इति मध्वविजये

स्वरूपपरिचयं चकार । भगवतः अनन्याराधनेन महत्फलं लेभे । श्रीमध्वाचार्यस्य गुरुः इति विशेषता । तत्र कारणन्तु –

**पुरैव कृष्णाकरसिद्धशुद्धिमत्**

**वरान्नभुक्त्या किल पाण्डवालये ।**

**विशोधितात्मा मधुकृत्प्रवृत्तिमान्**

**चचार कांश्चित्परिवत्सरान् मुदा** ॥ [मध्व,4.7] इति पूर्वं पाण्डवालये मधुकरवृत्तिं कुर्वन् आसीत् । तत्र द्रौपद्याः पवित्रकरान्नभक्षणप्रभावेण विशोधितः बभूव । तत्प्रभावेण इदानीं श्रीअच्युतप्रेक्षः इति नाम्ना हंसनामकपरमात्मनः दिव्यवेदान्तपीठे विराजमानः अभवत् । भगवतः श्रीअनन्तेश्वरस्य परमानुग्रहेण शुद्धयतिजीवनं यापयत् । भगवतः अनुग्रहेण श्रीमध्वाचार्यः शिष्यो बभूव । “शिष्यादिच्छेत् पराजयम्” इति वचनानुसारं मध्वशास्त्रं अधीत्य मुक्तियोग्यो बभूव ।

श्रीमध्वाचार्यस्य प्रियशिष्यः श्रीसत्यतीर्थयतिः । सञ्चारे श्रीमध्वाचार्यस्य संस्थानदेवान् स्वीकृत्य अग्रे गच्छति स्म ।

एकदा कानने व्याघ्रः सत्यतीर्थं जिघांसुः अस्योपरि अपतत् । तदा झटिति श्रीमध्वाचार्यः पाणिना ताडनमात्रेण निराचक्रे । एवम् श्रीमध्वाचार्यस्य परमानुग्रहपूर्णः आसीत् ।

भावप्रकाशिकायाम् –

**मध्वं दुर्विषहं मत्वा देवं सङ्गृह्य चाग्रतः ।**

**प्रयान्तं सत्यतीर्थार्यं जिघांसुर्व्याघ्र आपतत्** ॥ इति निरूपितम् ।

**सत्योच्छेदे सेच्छापातं व्याघ्राकारम् दैत्यव्याघ्रम् ।**

**प्राळेयाद्रेः प्रान्ते प्राज्ञः पाणेर्लीलालेशेनाऽस्यत्** ॥ [मध्व.10.23]

श्रीसत्यतीर्थः श्रीमध्वाचार्यस्य परमपवित्रं ब्रह्मसूत्रभाष्यं अलिखत् ।

**गाङ्गमङ्गलतरङ्गभङ्गदप्रान्तसुश्रिहरिवेश्मकृत्समः ।**

**यद्गतैकतमवर्णलेखकःसत्यतीर्थ इह भाष्यमालिखत्** ॥ [मध्व.9.13] एवम् महाभाग्यसम्पन्नः श्रीसत्यतीर्थः श्रीमध्वाचार्यस्य आदेशानुसारं श्रीअच्युतप्रज्ञतीर्थस्य उत्तराधिकारी अभवत् । तेन प्रवर्तितं मठद्वयम् प्रसिद्धम् । एकः मठः श्रीभण्डारकेरी मठः । अपरः श्रीभीमनकट्टे मठः । उभयोः मठयोः संस्थानमूर्तिः श्रीरामः । तत्रापि श्रीभीमनकट्टे मठे अपूर्वः शाळग्रामः विद्यते । श्रीमध्वाचार्यः गुरवे श्रीअच्युतप्रज्ञाय गुरुदक्षिणारूपेण दामोदरशाळग्रामं अदात् । तं शाळिग्रामं इदानीमपि संस्थाने प्रतिदिनं पूजयन्ति ।

श्रीमठस्य इतिहासः दशसहस्रवर्षात्मकः । पाण्डवकुलीनः राजा जनमेजयः तीर्थयात्रां कुर्वन् कर्नाटकस्य तुङ्गातीरं आजगाम । अयं प्रदेशः तीर्थहळ्ळिपरिसरे वर्तते । पूर्वं वनवासकाले पाण्डवा अपि आजग्मुः । प्रकृतिसौन्दर्यं द्रौपदी आस्वादितवती ।

तत्र जनानां उपयोगाय नद्यां तीर्थमेकं चकार । “कवलेदुर्गा” इति इदानीं प्रदेशस्यास्य नाम । तत्रैव दूर्वासागस्त्यादयः मुनयः वासं चक्रुः । भीमसेनस्य जनोपकार्यं श्रीकृष्णः अभ्यनन्दत् । तस्मिन्नेव प्रदेशे स्वाङ्गुलीत्रयेण सङ्गमम् निर्मिमे । इदानी तत्र नदी भागत्रयेण प्रवहति । गङ्गा–यमुना–सरस्वती इति नाम अभवत् । स्कान्दपुराणस्य सह्याद्रिकाण्डे तुङ्गामाहात्म्यविभागे विशेषेण वर्णितम् । अत एव अस्य प्रदेशस्य “भीमनकट्टे” इति व्यवहारः वर्तते । कालान्तरे राजा जनमेजयः सर्पनाशप्रायश्चित्तार्थं तीर्थयात्रां कुर्वन् अत्र आजगाम । पाण्डवानां कार्यं श्रुत्वा सन्तुष्टः सन् प्रायश्चित्तरूपेण भूदानं अकरोत् । अत एव अयं मठः श्रीभीमनकट्टे मठः इति प्रसिद्धो बभूव । इदानीमपि दानस्य ताम्रशासनं मठे वर्तते । एवं माध्वपरम्परायां अत्यन्तप्राचीनसंस्थानम् इति सुविख्यातम् । तीर्थहळ्ळिग्रामतः आगोम्बे मार्गे अनतिदूरे वर्तते । तस्मिन् संस्थाने इदानीं परमपूज्य श्री श्री रघुवरेन्द्रतीर्थश्रीपादः विराजते । परिसरे आर्षवातावरणम् अनुभवामः ।

## श्रीअनुरुद्धतीर्थः

## गृहस्थशिष्याः

श्रीमध्वाचार्यात् बहवः गृहिणः अपि शिष्यत्वं स्वीचक्रुः । मध्वशिष्यानां सङ्ख्या अधिका बभूव ।

**मध्वप्रशिष्याः बहवः शिष्या एषां मुहुस्तथा ।**

**अलञ्चक्रुः अलं पृथ्वीं सर्वे सद्गुणभूषणाः** [मध्व.15.132] ।

तेषु त्रयः लिकुचकुलशेखराः अग्नय इव प्रदीप्ताः । एकः ग्रन्थकर्तुः श्रीनारायणपण्डितस्य पिता श्रीत्रिविक्रमपण्डिताचार्यः ।

अपरः ग्रन्थपालः शङ्करार्यः । अन्यः अपि शङ्करार्यः । श्रीवामनपण्डितः इति कश्चन पण्डितः । "त्रैविक्रार्यदास" इति काव्यनाम । षट्प्रश्नोपनिषद्भाष्यटीकां चकार । टीकायां "समर्पयत् वामनोऽयम्" इति सूचयामास । एषः श्रीनारायणपण्डितस्य पुत्रः अथवा शिष्यः इति वदन्ति । परन्तु लिकुचवंशीयः इत्यत्र न सन्देहः । आनन्दमाला–अणुभाष्यटीका इति अस्य कृतयः । श्रीरघुनाथाचार्यः इति गृहस्थशिष्यः । मध्वविजये अस्य उल्लेखः नास्ति । परन्तु अनेन विरचिते "वादिपराजय" ग्रन्थे विवरणं वर्तते । कल्याणीदेवी इति नाम लिकुचवंशे प्रसिद्धम् । श्रीत्रिविक्रमार्यस्य सोदरी । एषा "लघुतारतम्यस्तोत्रम्" "लघुवायुस्तुतिः" इति ग्रन्थद्वयं चकार । एवं एते शिष्यक्षेत्रेषु सद्विद्याबीजावापैकदीक्षिताः बभूवुः ।

**"ग्रामण्यो ब्राह्मणाग्रण्यः**
**प्रापुः पूर्णेक्षशिष्यताम् ।**
**एषां सद्गुप्तिमात्रेण**
**भवेत् किल परं पदम् ॥** [मध्व.15.137] एवं सर्वेऽपि शिष्याः बभूवुः ।

## महाकाव्ये अनुक्तानि अन्यत्रोक्तानि क्षेत्राणि

श्रीमध्वविजयमहाकाव्ये यानि क्षेत्राणि वर्णितानि तानि सर्वाण्यपि इतःपूर्वं निरूपितानि । कानिचन क्षेत्राणि अस्मिन् काव्ये अनुक्तानि अन्यत्र उक्तानि सन्ति । यथा आनन्दतीर्थाग्रहारः– तिरुपतिः– मुत्तिगे – श्रीमुष्णम् – मध्यवाटमठः– कटत्तिलमठः – इत्यादीनि क्षेत्राणि । एतेषां विवरणं इदानीं चिन्तयामः ।

## आनन्दतीर्थाग्रहारः

आन्ध्रप्रदेशे बेंङ्गळूरु – तिरुपतिमहामार्गे चित्तूरु इति प्रसिद्धं नगरं विद्यते । चित्तूरुमण्डले तीर्थम् इति ग्रामविशेषः वर्तते । वस्तुतः कर्नाटकस्य मुळबागिलु ग्रामतः कुप्पम् मार्गे समीपे वर्तते । सम्पूर्णग्रामीणपरिसरः । ग्रामस्य बहिः विशालतटाकं विद्यते । अस्मिन् ग्रामे पुरातनं श्रीकोदण्डराममन्दिरं विराजते ।

श्रीमध्वाचार्यः तिरुपतिक्षेत्रयात्रायां अत्र आगत्य कानिचन दिनानि वासं अकरोत् इति ग्रामस्य ज्येष्ठाः वदन्ति । श्रीमध्वाचार्यस्य प्रभावात् “आनन्दतीर्थाग्रहारः” इति नाम अभवत् इत्यपि भावयन्ति । अग्रहार इत्यस्य ब्राह्मणानां निवासप्रदेशः अर्थः । आनन्दतीर्थेण अयं अग्रहारः निर्मितः इति कारणेन “आनन्दतीर्थाग्रहारः” इति । इदानीं ब्राह्मणा अपि तत्र अधिकसङ्ख्यायां न सन्ति । वृत्तिनिमित्तं नगरान्तरं जग्मुः । कानिचन गृहाण्येव ब्राह्मणानां विद्यते । केवलं कृषिकाः एव निवसन्ति । परन्तु शासनं ताम्रपत्रं वा अत्र नास्ति । केवलं जनानां वाक्परम्परा वर्तते ।

श्रीमन्त्रालयमठाधीशाः परमपूज्याः श्री श्री सुबुधेन्द्रतीर्थश्रीपादाः शिष्यैः स्थळान्वेषणं अकुर्वन् । इतिहासज्ञः संशोधकः डा.व्यासनकेरे प्रभञ्जनाचार्यः अत्र बहुवारं आगत्य सन्दर्शनं चकार । इदानीं प्रतिवर्षं मध्वनवमीकार्यक्रमं वैभवेन आयोजयन्ति । संशोधनेन किमपि स्मारकं लभेत् इति ममाशा ।

## तिरुपतिः

स्वयंव्यक्तक्षेत्रेषु तिरुपतिः एकं प्रसिद्धं क्षेत्रम् । जगन्नियामकस्य श्रीनिवासस्य निवासहेतुत्वात् विश्वविख्यातं अभवत् । द्वादशपुराणेषु वर्णितक्षेत्रमिति अस्य क्षेत्रस्य वैशिष्ट्यम् । वेङ्कटाद्रिः चतुर्युगपर्वतः । पापनाशकत्वात् वेङ्कटाद्रिः ।

**"सर्वपापानि वें प्राहुः कटस्तद्दाह उच्यते ।**

**तस्माद्वेङ्कटशैलेति लोके ख्यातो भविष्यति ॥**

इति भविष्योत्तरपुराणे वर्णितम् ।

वेङ्कटाद्रौ वासं करोतीति वेङ्कटेशः । अस्मिन्नेव पर्वते हनूमान् अवातरत् । चतुर्मुखब्रह्मा अत्र उत्सवं चकार इति कारणतः ब्रह्मोत्सव इति अत्र नवरात्रौ विशेषोत्सवः भवति । अत्रैव स्वामिपुष्करणी इति सरोवरः वर्तते । अस्मिन् सरोवरे देवाधिदेवाः स्नातुं आगच्छन्ति ।

**धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये ।**

**आयान्ति सर्वतीर्थानि स्वामिपुष्करणी जले** ॥ इति भविष्योत्तरपुराणे स्वामिपुष्करिण्यः महिमा निरूपिता ।

भगवान् वराहस्वामी अस्य प्रदेशस्य नियामकः । उभावपि रूपौ अभिन्नौ । "स्वामिपुष्करणीतीरे रमया सह मोदते" इति पुराणवचनम् । वैष्णवानां प्रधानक्षेत्रम् । अत एव अनेके यतयः हरिदासाश्च अत्र आगत्य भगवदाराधनं चक्रुः ।

श्रीमध्वाचार्यः सञ्चारक्रमेण श्रीक्षेत्रं तिरुमलं प्रति यात्रां अकरोत् । श्रीमध्वाचार्याय विशेषानुग्रहं भगवान् अकरोत् [...] । सज्जनानां प्रार्थनया तत्रैव चातुर्मास्यव्रतम् स्वीचकार । पर्वते सुवर्णमुखरीनदी वर्तते । अनतिदूरे एकः आश्रमः अस्ति । ब्रह्मशिला इत्यत्र व्रतं चक्रे । अत्रैव अगस्त्यमहामुनिः तपस्तेपे । गयासान्निध्ययुक्तप्रदेशः इति पुराणेषु [...] वर्णितम् । चातुर्मास्यकाले प्रतिदिनं पाठ–प्रवचनकार्यक्रमः आसीत् । तस्मिन् कार्यग्रमे प्रतिदिनं एकः महान् तेजस्वीपुरुषः आगत्य उपविशति स्म । सर्वेषां मनसि जिज्ञासासीत् "कोऽयम्"इति । अन्तिमदिने श्रीमध्वाचार्यः अस्य परिचयं चकार " अयं देदीप्यमानः पुरुषः पर्वतस्य अधः पद्मसरोवरे निवसति ।

श्रीनिवासकल्याणे साक्षीभूतः शुकमुनिः । महाभागवतोत्तमः पाठार्थं आगच्छति स्म" इति । श्रुत्वा तद्वचनं सर्वे प्रहृष्टाः । एवं तिरुमलक्षेत्रे श्रीमध्वाचार्यः चातुर्मास्यव्रतं चक्रे इति श्रीविजयीन्द्रतीर्थश्रीपादः मध्वाध्वकण्ठकोद्धारग्रन्थे अवर्णयत् । ब्रह्माण्डपुराणस्य वेङ्कटगिरिमाहात्म्ये तृतीयाध्यायश्लोकान् उद्धृत्य समर्थितवान् । श्रीवादिराजश्रीपादोऽपि "आनन्दतीर्थवरदे" इति पदेन सूचयामास ।

## मुत्तिगे

कर्नाटकस्य विजापुरनगरं सर्वे जानन्त्येव । तस्य नगरस्य अनतिदूरे विजापुर–बागलकोटे मुख्यमार्गे मुत्तिगे इति अप्रसिद्धः ग्रामः वर्तते । तस्मिन् ग्रामे केवलं कानिचन ग्रहाण्येव सन्ति । तत्र श्रीलक्ष्मीनरसिंहदेवालयः अस्ति । अत्यन्तप्राचीनः देवालयः । अश्वत्थवृक्षे प्रकटितः श्रीनरसिंहः शान्तस्वरूपेण अभयं वितरन् विराजते । श्रीमध्वाचार्यः महाराष्ट्रराज्यगमनसमये अत्र आगत्य पूजां अकरोत् इति तत्रत्याः वदन्ति । दिनत्रयं यावत् अत्र वास चकार । तत्रत्यं अर्चकं निष्कास्य अगस्त्यगोत्रजान् नियुक्तवान् । इदानीमपि अगस्त्यगोत्रजाः पूजयन्ति ।

इतिहासेऽपि अस्य देवालयस्य उल्लेखः लभ्यते । यदुवंशस्य षष्ठमः बह्लाळिविक्रमः शतृणां आक्रमणेन सन्तप्तः रक्षणार्थं काननम् आजगाम । रात्रौ अशरीरवाणी अभवत् "अस्मिन् कानने देवाः एव निवसन्ति । मानवानां अवकाशः नास्ति । अत त्वं इतः शीघ्रं गच्छ" इति । तच्छृत्वा भीतः राजा "यदि गच्छामि दुष्टाः मां संहरन्ति । अत मां अनुगृह्णन्तु" इति प्रार्थितवान् । तदा देवा ऊचुः "अस्माकं अनुग्रहः भगवतः नरसिंहस्य च कृपाबलं वर्तते" इति । राजा देवाज्ञया बहिर्गतवान् ।

विजापुरस्य पुरद्वारे आयान्तं एनं दृष्ट्वा विरोधिनस्सर्वे पलायनं चक्रुः । राजा तु आश्चर्यचकितः तान् अनुगत्य पृष्ठवान् "किमर्थं पलायनं कृतवन्तः" इति । तदा ते ऊचुः गजाकारसिंहं वयं दृष्टवन्तः इति । तेन राजा अस्य काननस्य महिमां अनुभूय पूजादिव्यवस्थां अकरोत् इति तत्रत्येतिहासः ।

## श्रीमुष्णम्

श्रीमुष्णक्षेत्रम् स्वयंव्यक्तवैष्णवक्षेत्रेषु एकम् । भगवतः श्रीवराहस्य सन्निधानात् इदं क्षेत्रं परमपावनमभूत् । अत्र भगवान् भूवराहः मूलमूर्तिः । यज्ञवराहः उत्सवमूर्तिः । श्रीमुष्णम् तमिळुनाडुराज्ये तिरुकोयिलूरु इति ग्रामः वर्तते । ततः गन्तव्यम् । अत्र भगवान् श्रीवराहावतारं अकरोत् इति स्थळपुराणे वर्णितम् । श्रीमुष्णस्य महिमा वराहपुराणे नारदपुराणे च विस्तृतरूपेण वर्तते ।

**त्रिपुरे च हताः दैत्याः ये च सौगन्धिके हताः ।**

**विष्णावयन्ति ते जाताः धरायां वैष्णवं पदम् ।**

**मातरिश्वा ततो जातो निराकृत्य च दुष्पथम् ।**

**स्थापयिष्यति सन्मार्गम् एते धर्मप्रवर्तकाः ॥** इति पुराणवचनम् मध्वावतारस्य सूचनां ददाति ।

चातुर्मास्यकाले एकदा विशिष्टप्रसङ्गः समभवत् । श्रीमध्वाचार्यः शिष्यैः सह यतिभिक्षार्थं एकं गृहं अगमत् । जलक्षामः आसीत् तद्ग्रामे । तत्र कान्ती इति तद्गृहस्य माता दूरतः जलं आनयन्ती आसीत् । सा गर्भिणी आसीत् । तत्सन्निवेशं दृष्ट्वा श्रीमध्वाचार्यः अनुग्रहोन्मुखः अभवत् । सा भक्त्या श्रद्धया च स्वागतं चकार ।

तेन सन्तुष्टः करुणापूर्णहृदयः श्रीमध्वाचार्यः स्वहस्तेन दण्डेन भूखननं अकरोत् । भूमेः विदारणेन जलप्रवाहः समजनि । तत्रैव सरोवरं चकार । तदेव "दण्डतीर्थम्" इति ख्यातम् । जनानां समस्या शाश्वतं परिहृता ।

**"जनस्य कृष्णाद्विमुखस्य दैवात्**

**अधर्मशीलस्य सुदुःखितस्य ।**

**अनुग्रहायेह चरन्ति नूनं**

**भूतानि भव्यानि जनार्दनस्य"** इति भागवतोक्तप्रकारेण श्रीमध्वसञ्चारः

जनहिताय लोकोद्धाराय समभवत् ।

श्रीमध्वाचार्यः जीवकुलसंरक्षणाय तीर्थत्रयं चकार । तत्र प्रथमं तीर्थं पाजकक्षेत्रे बाल्ये पितुः स्नानार्थम् निर्मितं "वासुदेवतीर्थम्" इति । द्वितीयं तीर्थं कापुसमीपे पूगवनान्वयजो द्विजस्य गुरुकुले निर्मितं "दण्डतीर्थम्" इति । तृतीयं श्रीमुष्णक्षेत्रे निर्मितं "दण्डतीर्थम्" इति । श्रीमध्वाचार्यस्य अनुग्रहं इदानीमपि तत्रत्याः स्मरन्ति ।

तत्रैव एकदा मन्त्रसिद्धः कश्चन योगी आजगाम । स च वराहमन्त्राणां विशेषज्ञः मन्त्रशास्त्रकोविदश्च । श्रीमध्वाचार्यं दृष्ट्वा वराहमन्त्रस्य विवरं सगर्वं जगाद । तदा श्रीमध्वाचार्यः हसन् मन्त्रस्य विस्तारस्वरूपं वर्णयामास [–] । तेन सन्तुष्टः योगी नतमस्कः अभवत् । एवं श्रीवराहसन्निधाने वराहमन्त्राणां आविष्कारम् अकरोत् । अत एव देवालयस्य स्तम्भे मध्वविग्रहं निर्मिमिरे । श्रीउत्तरादिमठाधीशाः श्रीक्षेत्रं यदा आगमिष्यन्ति तदा उत्सवविग्रहं पूजार्थम् दास्यन्ति । एवं श्रीमध्वाचार्यस्य प्रभावः श्रीमुष्णक्षेत्रे अभवत् ।

"श्रीमुष्णम्" इत्यस्य अर्थनिष्पत्तिः –

**"दुष्टश्रियायुः कीर्त्यादेः मोक्षणामत्र वै भुवि ।**

**श्रीमुष्णमिति चाख्या हि क्षेत्रस्यास्य भविष्यति"** पुराणे वर्तते ।

देवालयस्य अनतिदूरे नित्यपुष्करणी वर्तते । अत्यपूर्वा पुष्करणी । स्नानमात्रेण सर्वव्याधिनिवारणी ।

श्रीमध्वाचार्यः शिष्यैस्सह श्रीमुष्णम् आजगाम । तत्रस्थम् भगवन्तं प्रणम्य अस्तौत् ।

**"तस्य यज्ञवराहस्य विष्णोः अमिततेजसः ।**

**प्रणामं ये प्रकुर्वन्ति तेषामपि नमो नमः"** इति स्तोत्रं चकार ।

इदं स्तोत्रम् श्रीकृष्णामृतमहार्णवे वर्तते । इदानीमपि तत्र अर्चकाः इदं स्तोत्रं देवस्य पुरतः पठन्ति । श्रीमध्वाचार्यः अस्मिन् क्षेत्रे चातुर्मास्यव्रतम् अकरोत् इति पद्मपुराणे उल्लेखः वर्तते । तमिळुनाडुराज्यस्य प्रसिद्धं क्षेत्रम् ।

## मध्यवाटमठः

मध्यवाटमठः उप्पिनङ्गडि–बण्ट्वाळमार्गे कावळकट्टे समीपे वर्तते । मध्व इति ग्रामः । श्रीमध्वाचार्यः रजतपीठे प्रातः श्रीकृष्णं संपूज्य सुब्रह्मण्यमार्गे मध्यवाटमठं आगच्छति स्म । मध्याह्नपूजां अत्रैव करोति स्म । द्वितीयवारं यदा बदरीं जगाम तदा भगवान् श्रीवेदव्यासः अष्टौ श्रीव्यासमुष्टीः अदात् ।

**"प्राप स नारायणतः शुद्धशिलात्मप्रतिमाः**

**यासु स पद्मासहितो दोष्यहितः सन्निहितः ॥** [मध्व.10.24]

इति वर्णितम् ।

व्यासमुष्टीः इत्यस्य भगवतः श्रीवेदव्यासस्य अपूर्वप्रतीकः[2] । स्वं विरहितुं असमर्थाय श्रीमध्वाचार्याय स्वसन्निधानोपेताः व्यासमुष्टीः ददौ [3] ।

तासु प्रतिमासु एकां प्रतिमां मध्यवाटमठे स्थापयामास [4] । बहुकालं स्वयमेव अर्चयामास । उडुपि–सुब्रह्मण्यप्रयाणसमये मध्याह्नपूजां अत्रैव अकारयत् । इदानीं व्यासमुष्टिः श्रीसोदेमठे संस्थाने विराजते । मध्याह्नस्य पूजां भिक्षाञ्च समर्प्य श्रीमध्वाचार्यः किञ्चित्कालं वृक्षविशेषस्य अधः विश्रान्तिं स्वीकरोति स्म । अयं प्रदेशः तत्रैव अनतिदूरे मद्द इति एकः प्रदेशः वर्तते । अस्मिन् प्रदेशे एकः अश्वत्थवृक्षः । तत्रैव श्रीमध्वाचार्यः विश्रान्तिं स्वीकरोति स्म । बहुरम्यप्रदेशः । श्रीपेजावरमठस्य अधीने वर्तते । तत्र इदानीं जीर्णोद्धारकार्यक्रमः सम्पन्नः । प्राचीनसौन्दर्यं सम्पूर्णं नष्टम् । नूतनभवनस्य वैभवं द्रष्टुं शक्यते । तत्र एकं शिलाशासनं स्थापितवन्तः ।

## कटत्तिलमठः

श्रीमध्वाचार्यः सज्जनान् उद्धर्तुं सर्वमूलग्रन्थान् चकार । व्यासदेवसम्मतान् तान् ग्रन्थान् संरक्षितुं नूतनव्यवस्थां अकरोत् । कलिकालबलेन जनाः ज्ञानकार्ये अनासक्ताः भवन्ति । ज्ञानिनां सङ्ख्यापि ह्रासा भवति । पाठ–प्रवचनादिकार्यक्रमाः तिरोहिताः भवन्ति । तेन शुद्धपाठग्रन्थाः अपि लुप्ताः भवेयुः । परन्तु जिज्ञासवः सर्वकालेऽपि भवन्त्येव । तेषां संरक्षणं आवश्यकम् । दुष्टजनानां शिक्षणन्तु हरिस्वसा दुर्गा पयस्विनी तटे अवतीर्य करिष्यति । जिज्ञासुजनानां कृते ज्ञानसंरक्षणं करिष्यामि इति कृतनिश्चयः श्रीमध्वाचार्यः ताम्रपत्रेषु ग्रन्थान् लेखयामास । तान् ग्रन्थान् कटत्तिलग्रामे मठे भूगतं अकरोत् [2] । कालान्तरे शुद्धपाठनिमित्तं मध्वानुजः श्रीविष्णुतीर्थः कुमारपर्वतात् अवतीर्य भूस्थापितान् ग्रन्थान् उद्धरति इति मध्वसूचना ।

**तिरोहिते सन्मतेऽस्मिन् विष्णुतीर्थो गुहाचलात् ।**

**आगत्योद्धृत्य तत्रत्य ग्रन्थान् स प्रथयिष्यति** इति श्रीहृषीकेशतीर्थः

सम्प्रदायपद्धत्यां जगाद । अत एव अन्ये यतयः प्रयत्नं न चक्रुः । कतिपयवर्षात् पूर्वं कश्चन महानुभावः [बहुशः श्रीविद्यामान्यतीर्थः] स्थळजीर्णोद्धारं कर्तुं कृतमतिः कुण्डसमीपे कार्यम् आरभत । तदा कश्चन वृद्धः उच्चैः "भवान् श्रीविष्णुतीर्थो वा?" इति अपृच्छत् । तदारभ्य यः केऽपि साहसकार्यं कर्तुं न चिन्तयन्ति ।

कटत्तिल इति ग्रामः मङ्गळूरु – सुळ्य मुख्यमार्ते वर्तते । तत्र एकः मठः । मठस्य अनतिदूरे "श्रीव्यासतीर्थम्" इति कुण्डः दृश्यते । तत्रैव ग्रन्थान् भूस्थापनं अकरोत् । इदानीमपि तत्र ताम्रसुगन्धः अनुभववेद्यः भवति । प्रशान्तः प्रदेशः । अस्मिन् मठे श्रीमध्वाचार्यः वासं चकार । मठे मध्वपूजितः श्रीगोपालकृष्णमूर्तिः वर्तते । मठः श्रीअदमारुमठस्य अधीने वर्तते । श्रीगोपालकृष्णप्रतिमा अदमारुमठस्य संस्थाने पूज्यते । इतिहासे अत्यन्तमहत्वं आवहति अयं प्रदेशः । बहवः न जानन्ति । परन्तु दर्शनीयः प्रदेशः ।

## बेलूरुक्षेत्रम्

बेलूरु हासनमण्डलस्य प्रमुखयात्राक्षेत्रम् । अत्र शिल्पकलावैभवः प्रधानतया आकर्षति । देश–विदेशतः लक्षाधिकाः यात्रार्थिनः प्रतिवर्षं आगमिष्यन्ति । पूर्वं बेलूरुग्रामं "वेलुपुरम्" इति आह्वयन्ति स्म । राजा विष्णुवर्धनः तलकाडुक्षेत्रे होय्सळैः सह प्रवृत्ते युद्धे विजयं प्राप । तन्निमित्तम् श्रीवैष्णवमतसंस्थापकानां श्रीरामानुजाचार्याणां आशीर्वादं प्राप्य श्रीचेन्नकेशवं प्रतिष्ठापयामास । इमं देवालयं "विजयनारायणदेवालयः" इति जनाः निर्दिशन्ति । यगचिनदी अत्र प्रवहति । एषा नदी हेमावतीनद्याः उपनदी ।

पूर्वं अस्मिन् ग्रामे श्रीपद्मनाभतीर्थश्रीपादः मध्वाचर्यस्य आदेशानुसारं उवास । गुरुं श्रीमध्वाचार्यं बेलूरुग्रामं आगन्तुं प्रार्थयामास । अत्यन्तवैभवेन गुरुं स्वागतीचकार । तेन सन्तुष्टः श्रीमध्वाचार्यः एकान्ते विशिष्टोपदेशं व्यधात् ।

**आजाप्यारादटन्तं व्रतनियमविधौ पद्मनाभं यतीन्द्रम्**

**दृष्ट्वा चाज्ञाप्य भिन्नं विधिममितमतिः क्षेत्रतो निर्गतोऽभूत्** ॥ [सं.प.20]

इति उपदिदेश । स्वावतारस्य परिसमाप्तिं सूचयित्वा वेदान्तसाम्राज्यं निर्वोढुं आदिदेश । चतुर्मुखब्रह्मकरार्चितश्रीरामचन्द्रं अदात् ।

अयम् फलितार्थः । बेलूरुग्रामे श्रीमध्वाचार्यः वासं अकरोत् इति काव्ये नास्ति । काव्ये अनुक्तप्रदेशः । तथाऽपि बेलूरुचेन्नकेशवदेवालये श्रीनरसिंहस्वामी वर्तते । तस्य अग्रे एकः स्तम्भः वर्तते । स्तम्भस्य दक्षिणे भागे शिलाशासनं वर्तते । [ಎಪಿಗ್ರಾಫಿಯಾ ಕರ್ನಾಟಕಾ ಸಂಪುಟ 9, ಪುಟ 56] तस्मिन् शासने बेलूरुग्रामे एकः प्राचीनमाध्वमठः आसीत् इति वर्तते । स मठः श्रीपद्मनाभतीर्थश्रीपादकालीनः इति प्रतीतिः वर्तते । श्रीपद्मनाभतीर्थश्रीपादस्य मूलवृन्दावनं हम्पे समीपे नववृन्दावनप्रदेशे वर्तते ।

## माध्वीयशासनानि

## उत्कले मध्वप्रभावः

उत्कले इदानीं माध्वसम्प्रदायस्य नामापि न श्रूयते । परं तु एकदा अयं मध्वाचार्यः उत्कले आसीत् इत्यत्र प्रमाणानि उपलभ्यन्ते । अस्य सम्प्रदायस्य आचार्यात् पूर्वया परम्परया अपि निकटसम्बन्धः आसीत् इति ज्ञायते । माध्वपरम्परां हंसपरमात्मानं आरभ्य कथयन्ति ।

सनकादयः चत्वारः , दूर्वासा–ज्ञाननिधितीर्थः–गरुडवाहनतीर्थः–कैवल्यतीर्थः–ज्ञानेशतीर्थः–परतीर्थः–सत्यप्रज्ञतीर्थः–प्राज्ञतीर्थः–अच्युतप्रज्ञतीर्थः–आनन्दतीर्थः[मध्वः] इति । परन्तु अस्य सम्प्रदायस्य प्रतिष्ठातः मध्वाचार्यः एव आसीत् । अत एव तन्नाम्ना व्यपदिश्यते । केचन प्राच्य–पाश्चात्यविद्वांसः माध्वमते विष्णोः सर्वोत्तमत्वं बहुबीजवादं च दृष्ट्वा मध्वाचार्यः अपि अन्यसम्प्रदायेन प्रभावितः इति आकलयन्ति । परन्तु एतत् कदापि नैव सङ्गच्छते । विषयेस्मिन् प्रसिद्धविद्वान् डा.बि.एन्.के.शर्मामहाभागः मतं स्पष्टतया प्रतिपादितवान् ।

श्रीमध्वाचार्यः बदरिकाश्रमतः प्रत्यावर्तनसमये अवश्यमेव उत्कलं आगतः स्यात् इति सम्भाव्यते । यतः आचार्यस्य चतुर्षु प्रधानशिष्येषु द्वितीयः श्रीनरहरितीर्थः उत्कलीयगजपतिराजस्य मन्त्री आसीत् इति शिलालेखेन अवगम्यते । सन्न्यासग्रहणानन्तरमपि मन्त्रिपदे स्थित्वा कार्यं अकरोत् । राज्ञि स्वर्गते सति अल्पवयस्कस्य तत्पुत्रस्य प्रतिनिधित्वेन प्रायः द्वादशवर्षं यावत् राज्यं पर्यपालयत् । निश्चयेन तस्मिन्नेव समये उत्कले स्वमतप्रसारं अकरोत् इति चिन्तयितुं शक्यते । ततः तेषामेव सतीर्थीयानां शिष्याः प्रसिद्धाः टीकाकाराः श्रीमज्जयतीर्थ–श्रीविद्याधिराजतीर्थ–श्रीव्यासराजादयः बहवः उत्कलं आगत्य मध्वमतप्रसारं अकुर्वन् ।

## शिलालेखः

**यश्च श्रीकमठाधिनायकमहाकार्यैकबद्धव्रतः**
**तस्य प्रच्युतिवारणाय शबरानीकक्षितिध्राशनिम् ।**
**धत्ते सत्करवालमस्य तटिता सन्त्यक्तजीवे रिपौ**
**हन्तव्यानवशेषणात् निजविधिः नो यस्य बोध्यस्तराम् ॥**

स्वस्ति श्रीशकवत्सरे हुतवहव्योमद्वयक्ष्मायुते
मेषे शुक्लशशाङ्कशेखरदिने वारे न सौम्ये वरे ।
प्रसादं कमठाधिपस्य पुरतो निर्माय शर्मप्रदो
योगानन्दनृसिंह एष भगवान्प्रीत्या प्रतिष्ठापितः ॥

आश्विनशुक्लदशमी दिवसे भुवि पावने
पाजकाख्ये शुचिक्षेत्रे दुर्गया चाभिवीक्षिते ।
जातो मध्याह्नवेलायां बुधवारे मरुत्तनुः ॥

## श्रीकृष्णमठस्य शासनम्

[1] श्रीकृष्णमठे [क्रि.श.1613 ] वेङ्कटपति देवस्य शासनं वर्तते । तच्छासनं प्रादेशिकभाषायां कन्नडभाषायां वर्तते । अतः कन्नडभाषायामेव अत्र प्रदत्तम् । शासनस्य सारांशः एवमस्ति –

ಮಹಾರಾಜಾಧಿರಾಜ ರಾಜ ಪರಮೇಶ್ವರ ವೆಂಕಟಪತಿ ಮಹಾರಾಜನು ಪೆನುಗೊಡೆಯಿಂದ ರಾಜ್ಯವಾಳುತ್ತಿದ್ದಾಗ ಅವನ ಆಜ್ಞೆಯು ಮೇರೆಗೆ ವೆಂಕಟಪ್ಪ ನಾಯಕನು ತುಳುರಾಜ್ಯ-ಮಲೆರಾಜ್ಯಗಳನ್ನು ಆಳುತ್ತಿದ್ದಾಗ ಶ್ರೀವೇದವೇದ್ಯತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳವರು ತಮ್ಮ ಪರ್ಯಾಯದಲ್ಲಿ ಉಡುಪಿಯ ಕೃಷ್ಣದೇವರ ಗರ್ಭಾಗಾರದ ಮುಂದಿನ ಮಠವನ್ನು ಶಿಲಾಮಯ ಮಾಡಿಸಿ ಆಮೇಲೆ ಎರಡು ನೆಲೆಯಾಗಿ ತಾಮ್ರದ ಹೊದಿಕೆಯುನ್ನು ಮಾಡಿಸಿದನು.

ಅನಂತರ ರಾಮಕೃಷ್ಣಪ್ಪ ಒಡೆಯರು ಬಾರಕೂರು ರಾಜ್ಯವನ್ನು ಆಳುವ ಸಮಯದಲ್ಲಿ ಅವರ ಅನುಮತದಿಂದ ಕೃಷ್ಣದೇವರನ್ನು ಪುನಃ ಪ್ರತಿಷ್ಠೆ ಮಾಡಿದ

ಸಂದರ್ಭದಲ್ಲಿ ವೆಂಕಟಪತಿ ಮಹಾರಾಯನ ನಿರೂಪದಿಂದ ಕೆಳದಿಯ ವೆಂಕಟಪ್ಪ ನಾಯಕನು ಬಾರಕೂರು ರಾಜ್ಯಕ್ಕೆ ಸೇರಿದ ನಾಲ್ವತ್ತು ನಾಡೊಳಗಣ ಹೂವಿನ ಕೆರೆ ಗ್ರಾಮವನ್ನು ಕೃಷ್ಣದೇವರ ಅಮೃತಪಡಿಗೆಂದು ದಾನಕೊಟ್ಟನು.ಅಲ್ಲದೆ ಅದೇ ದೇವರಿಗೆ ಇನ್ನೂ ಕೆಲವು ದಾನದ ವಿವರಗಳನ್ನು ಈ ಶಾಸನದಲ್ಲಿ ಕೊಡಲಾಗಿದೆ.

[ಕೆ.ವಿ.ರಮೇಶ್-ಎಮ್.ಜಿ.ಶರ್ಮಾ-೧೯೭೮]

ಕೊಂಕಣವರ್ಗದ ಬ್ರಾಹ್ಮಣ ಲಿಂಗಪ್ಪಯ್ಯ ಹಾಗೂ ದಾಮರ್ಸ್ ಪ್ರಭು ಅವರು ಕೊಟ್ಟ ದಾನಶಾಸನಗಳು [ಕ್ರಿ. ಶ.೧೬೧೪] ಕೃಷ್ಣಮಠದಲ್ಲಿವೆ.

[2] क्रि.श. 1366तमस्य बुक्करायकालीने शिलाशासने रजपीठपुरस्य श्रीचन्द्रेश्वरः **"मूडुदेव"** इति श्रीअनन्तेश्वरः **"पडुदेव"** इति सूचितम् ।

[3] आदि उडुपिप्रदेशे कङ्गमठः इति एकः मठः वर्तते । तत्र भारद्वजगोत्रीयानां कुलस्वामी श्रीकृष्णः विराजते । तत्रैकं शिलाशासनम् वर्तते । तस्मिन् शासने **"कङ्गमठस्य श्रीत्रैलोक्यभूषणतीर्थः बारकूरु** [क्रि,श.1329] **राज्यपालेन बोम्मरस ओडेयेन भूदानं स्वीचकार"** इति वर्तते ।

[4] बारकूरुनगरस्य चौळिकेरिस्थिते इम्मडि हरिहरस्य शासने [क्रि.श.1392] बारकूरु सिङ्गण्ण ओडेयः श्रीकृष्णमठार्थं भूदानं कृतवान् इति वर्तते ।

[5] इम्मडि हरिहरस्य क्रि.श.1394 तम वर्षस्य श्रीकृष्णमठस्य शासनम् । सारांशः एवं वर्तते ।

"ಮಹಾರಾಜಾಧಿರಾಜ ಪರಮೇಶ್ವರ ಹರಿಹರ ಮಹಾರಾಯನು ರಾಜಧಾನಿ ವಿಜಯನಗರದಿಂದ ಸಾಮ್ರಾಜ್ಯವನ್ನು ಆಳುತ್ತಿದ್ದ ಕಾಲದಲ್ಲಿ ಅವನ ಆದೇಶದ ಮೇರೆಗೆ ಹೆಗ್ಗಡೆ ಶಂಕರಸನು ಬಾರಕೂರಿನ ರಾಜ್ಯವನ್ನು ಆಳುತ್ತಿದ್ದಾಗ ಶಿವಳ್ಳಿಗೆ ಸೇರಿದ ಮೂಡಲ ನಿಡಂಬುರ ಗ್ರಾಮದ ಮಧ್ಯದ ಉಡುಪಿಯ ಕೃಷ್ಣದೇವರಿಗೆ ಅಮೃತಪಡಿ ಮತ್ತು

ನಂದಾದೀಪ್ತಿ ನಡೆಸುವ ಸಲುವಾಗಿ ಗದ್ದೆಗಳನ್ನು ನೀಡಲಾಗಿದೆ" ಎಂಬ ವಿವರವನ್ನು ನೀಡಲಾಗಿದೆ.

[6] रजतपीठपुरस्य इतिहासे अप्रियघटना एका प्रवृत्ता । क्रि.श.1437 तमशासने इयम् घटना उल्लेखिता वर्तते । सारांशः एवम् वर्तते ।

ಬಾರಕೂರಿನ ರಾಜ್ಯಪಾಲ ಅಣ್ಣಪ್ಪ ಒಡೆಯನು ಕ್ರಿ. ಶ.೧೪೩೪ರಲ್ಲಿ ಶಿವಳ್ಳಿಗೆ [ಉಡುಪಿ] ಧಾಳಿ ಮಾಡಿದ್ದರಿಂದ ಉಡುಪಿ ಕೃಷ್ಣಮಠದ ದೈನಂದಿನ ಧಾರ್ಮಿಕ ಆಚರಣೆಗಳಿಗೆ ಅಡ್ಡಿ ಉಂಟಾಯಿತು. ೧೪೩೭ರಲ್ಲಿ ಅಣ್ಣಪ್ಪ ಒಡೆಯನು ಈ ಬಗ್ಗೆ ಪರಿಹಾರ ನೀಡಿದನು. [ವಳ್ಳೂರು[ಉಳ್ಳೂರು] ಮಹಾಲಿಂಗೇಶ್ವರ ದೇವಸ್ಥಾನದಲ್ಲಿ ಬಾರಕೂರಿನ ರಾಜ್ಯಪಾಲನ ಕ್ರಿ.ಶ.೧೪೩೮ರ ದಾನಶಾಸನ ಇದೆ.]

7. चेर्काडिशासनम्

एकदा श्रीमध्वाचार्यः सञ्चारे आसीत् । बहुशः कुन्दापुरप्रदेशः । तदा तत्र ईश्वरदेव इति अरसः आसीत् । स श्रीमध्वाचार्यं दृष्ट्वा भूखननं कृत्वा अग्रे गन्तव्यम् इत्यादिदेश । स नियममेकं चकार । तस्य प्रदेशे सञ्चरन्तं सर्वं भूखननार्थं आदेशं करोति स्म । सः श्रीमध्वाचार्यमपि आदिदेश । परन्तु आचार्यस्य शक्त्या स्वयमेव भूखननं कुर्वन् कालं यापयत् । कन्नडभाषायां वर्तते ।

ಸ್ವಸ್ತಿ ಶ್ರೀಮತ್ ಪಾಂಡ್ಯಚಕ್ರವರ್ತಿರಾಯಬಿಟ್ಟದೇವಾಲುಪೇಂದ್ರದೇವರ
ವಿಜಯ ರಾಜ್ಯಮುತ್ತರೋತ್ತಾಭಿವೃಪ್ರವರ್ತಮಾನಚಂದ್ರಾರ್ಕತಾರಾಂಬರಂ
ಸಲುತ್ತಮಿರೆ ಶಕವರ್ಷ ೧೧೭೦ನೆಯ ಪ್ಲವಂಗ ಸಂವತ್ಸರದ ತುಲಾಮಾಸ
ಪ್ರಥಮ ದಿನ ಆದಿವಾರದಂದು ಶ್ರೀಮತು ರಾಜಧಾನಿ ಬಾರಹಕನ್ಯಾಪುರದರಮನೆಯಲು

ಮಮ್ಮಗಳು ಅಚಲಾದೆವಿ ಬಮ್ಮದೇವ ಒಡ್ಡಮದೇವ ಸಹಿತ ಸ್ಥಿರಸಿಂಹಾಸನಾರೂಢರಾಗಿ ವಡ್ಡೊಲಗಂಗೊಟ್ಟಿರಲು ಶ್ರೀಪಾದಸನ್ನಿಧಾನದಲು ಮೈದುನ ಯೀಶಬರದೇವ ಬಂಕಿವೆಗ್ಗಡೆ ಗಜಬಾಹು ಸಂಧಿವಿಗ್ರಹಿ ದೇವಪ್ಪರುಷರುಂ ಅಧಿಕಾರಿ ಆನಂದಿ ಸೇನಭೋವರುಂ ಇರಲು ಚೇರ್ಕಾಡಿಗರಿಳ್ದು ಕುಂಜಾಲುಳ ಮಾಡಿದ ---

[ವಸಂತ ಶೆಟ್ಟಿ]

8. चिक्कमगळूरुमण्डले कळस इति प्रदेशविशेषः । तत्र तुङ्गा प्रवहति । नद्याः मध्ये एका शिला वर्तते । तस्यां शिलायां प्रादेशिकभाषायां [कन्नड] उट्टङ्कितमस्ति । अत्रैव पूर्वं श्रीमध्वाचार्यः अत्र जनानां उपयोगाय बृहच्छिलां अनायासेनानीय स्थापयामास । तत्तुङ्गानद्यां अद्यापि एषा कथा अनुवर्ण्यते ।

"ಶ್ರೀಮಧ್ವಾಚಾರ್ಯೇಣ ಏಕಹಸ್ತೆನ ಆನೀಯ ಸ್ಥಾಪಿತಾ ಶಿಲಾ" इति लिखितमसस्ति । तथैव श्रीमध्वाचार्यस्य रेखाचित्रमपि उट्टङ्कितमस्ति । इदानीमपि सा शिला नद्यां यात्रिकैः पूज्यते ।



**प्रमाणानि**

[1] देवक्या बाललीलायाः सन्दर्शनसमुत्कया ।

प्रार्थितो बालरूपस्सन् मन्थानं मातृहस्तगम् ।

हरन् रहसि भैष्म्या प्राग्दृष्टस्तुष्टहृदा तदा ।

संप्रार्थितो देवशिल्पिकरात्स्वप्रतिमां शुभाम् ॥

सूत्रमन्थानहस्तां श्रीदिव्यगोपार्भकाकृतिम् ।

प्रियायै कारयित्वा यां ददौ स पूजिता तया ॥

नौकाद्वारा समायाता श्रीमध्वमुनिना ततः ।

रूप्यपीठनगर्यां हि स्थापिता पूजिता यथा ॥

श्रीकृष्णबालमूर्तिस्सा जयत्यखिलकामदा ।

रूप्यपीठपुरी रम्या कृष्णेन प्रथिता..... [गु.च.मृ]

[1..] आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ।

वैष्णवोऽस्मत्कुले जातः स नः सन्तारयिष्यति ॥ [कृ.म]

[2] श्रीपद्मनाभयतिसिन्धुसमुत्थितेयम् सन्न्यायरत्नपरमावलिरुज्वलाऽलम् ।

भूयादशेषसुजनौघसुखैकहेतुः सूत्रानुभाष्यपददीपनदीपरूपा ॥

[संन्यायरत्नावलिः]

[3] रमानिवासोचितवासभूमिः सन्न्यायरत्नावलिजन्मभूमिः ।

वैराग्यभाग्यो मम पद्मनाभतीर्थामृताब्धिः भवताद्विभूत्यै ॥ [न्यायसुधा]

[2] इष्ट्या व्यासाश्रमं गच्छन् मुख्यप्रेष्यो यतो मरुत्

प्रणिपत्य महान् मध्वो व्यासं निजगुरुं परम् ।

विज्ञापयामास भूमौ स्वव्यापृतसुदुष्करम्

निशम्य तस्य वाक्यानि व्यासः सर्वान्तरात्मकः ॥

स्वाधिष्ठानान् परं चाष्टौ ग्रावाणः कृपया ददौ ॥ [वा.पु]

[3] तीर्थं स्वपार्श्वभूमिं च मोक्तुं नेच्छति सन्मतौ ।

त्वत्स्नानाम्बुनि गङ्गा स्याच्छिलास्वास्वहमित्यदात् [भा.प्र]

[4] स्नेहार्द्रमध्वहृदयाख्यदशानुषक्तम् मोहाख्यसन्तमसकृन्तनतीव्रशक्तिम् ।

श्रीमध्यवाटमठपौरुटभाजनस्थम् व्यासप्रदीपमिममादरतो भजध्वम् ॥ ती.प्र.

[2] ततो दयावारिनिधिः ग्रामे सेतुतिलाह्वये ।

स्वशास्त्रग्रन्थमकरोत् भूगतं पूर्णशेमुषिः ॥ [सं.प.19]

[...] आनन्दतीर्थवरदे दानवारण्यपावके ।

ज्ञानदायिनि सर्वेशे श्रीनिवासेऽस्तु मे मनः ॥ [ती.प्र.3.29.]

[...] त्वं चापि गच्छ शैलेन्द्रं पूर्वं स्वर्णमुखीतटे ।

यत्र ब्रह्मशिला नाम सरिन्मध्ये च वर्तते ॥

अगस्त्यतपसा  पश्चात् गयासान्निध्यमत्र वै ।

पादा ईशानविष्ण्वादिदेवानां तत्र सन्ति हि ॥

यतिरूपो मातरिश्वा अष्टाविंशतिमे कलौ ।

अवतीर्य वसत्यत्र मध्वनामा वरं विभोः ॥

अवाप तपसा पुण्यः प्रीत्या चागस्त्ययोगिनः ।

तत्स्थापितालये पुण्ये चातुर्मास्यं करिष्यति ॥

शुकः श्रोष्यति सच्छास्त्रम् पद्मतीर्थादिहागतः । [ब्र.पु]

[–] त्रिंशद्वाराहमनुवित् कश्चिद्योग्यास विस्मितः ।

सूचितेष्वेव सर्वेषु मध्वेनाभ्यधिकेष्वपि ॥ [भ.प्र]

# पञ्चमोऽध्यायः

श्रीमध्वविजयमहाकाव्यस्य व्याख्यानपरम्परा -

महाकाव्येऽस्मिन् वर्तमानाः संशोधकविषयाः ।

चित्रमञ्जरी – परिशिष्टम् – सहायकग्रन्थानां विवरणम्

# पञ्चमोऽध्यायः

## श्रीमध्वविजयमहाकाव्यस्य व्याख्यानपरम्परा

श्रीनारायणपण्डिताचार्यः श्रीमध्वविजयं नाम महाकाव्यं प्रणिनाय । षोडशसर्गात्मकं महाकाव्यमिदं विरचय्य चारित्रिककाव्यपरम्परायाः चालनं अकरोत् । श्रीमध्वाचार्यस्य समक्षमे एव निर्मितमिदमिति काव्यस्यास्य महत्वम् । एतादृशं चारित्रिककाव्यम् काव्यप्रपञ्चे एव दुर्लभम् । अयमेव काव्यस्यास्य टीकाग्रन्थद्वयमपि अकरोत् । तत्र प्रमेयनवमालिका इति एका, भावप्रकाशिका इति अपरा । मध्वविजये अनुक्तानां प्रदेशानां नाम विवरणञ्च अत्र प्रतिपादितम् । तत्र प्रथमा प्रमेयनवमालिका मध्वविजयकाव्यस्य सङ्क्षेपस्वरूपः ग्रन्थः । नित्यपारायणोपयुक्तश्च । अत एव अस्य नाम "अणुमध्वविजयः" इति । मध्वविजयस्य प्रतिसर्गं द्वाभ्यां द्वाभ्यां पद्याभ्यां अवर्णयत् । ग्रन्थस्य उपसंहारे –

**"दशप्रमतिविक्रमं बहुविधात्मना हेमवत्**

**स मध्वविजयाभिदं व्यधित भावदीपाह्वयम् ।**

**प्रमेयनवमालिकां पुनरिमां च दक्षाञ्चितां**

**सतां श्रवणभूषणं व्यदधदेष नारायणः** ॥" इति काव्यस्य स्वरूपं अब्रवीत् ।

अस्याः प्रमेयनवमालिकायाः वैशिष्ट्यं श्रीरघुवर्यतीर्थश्रीमच्चरणैः सौरभप्रकाशिकायां स्फुटं वर्णितम् ।

अस्य काव्यस्य अन्या लघुटीका भावप्रकाशिका इति । अस्यां टीकायां अपूर्वाः विषयाः निरूपिताः । अस्याः टीकायाः आधारेणैव मध्वसन्दर्शितानां प्रदेशानां परिचयः भवति ।

**नमो जयात्मने यन्त्रे द्विजराजस्फुरच्छ्रिये ।**

**हरेरजस्य प्रिय ते हरये देवतात्मने** ॥ इति ग्रन्थस्य मङ्गळाचरणम् ।

उपसम्हारे तु स्वाभिप्रायं स्वपरिचयञ्च प्रकटीचकार ।

**"चर्या दृष्टा नरैः काश्चित् विस्मृता देवमायया ।**

**अविस्मृताश्च पुरुषैः नास्माभिः सकलाः श्रुताः ॥**

**श्रुताश्च काश्चिन्नैवोक्ताः देवगुह्यत्वनिश्चयात् ।**

**अन्यास्तथैव न प्रोक्ता ग्रन्थबाहुल्यभीतितः ॥**

**काव्यश्रिये वा गुरुकीर्तये वा**

**प्रोक्तं स्वयैवापि मनीषयेति ।**

**तस्मान्न शङ्क्येत महाजनेन**

**पुंसा कुशाग्रीयधियाप्यवश्यम् ॥**

**मन्दप्रबोधजनतोपकृतिं विधित्सुः**

**मध्वप्रसङ्गपरमोत्सवलम्पटोसौ ।**

**कृत्वापि मध्वविजयं व्यधितास्य किञ्चित्**

**भावप्रकाशनमिदं हरये नमोस्तु ॥**

**त्रिविक्रमविपश्चितो गुणनिधेः सुशिष्याः सुताः**

**सतामभिमतास्त्रयो यस्तृतीयोत्र नारायणः ।**

**स मध्वविजयं व्यधात् गुरुगिरा सदानन्ददः**

**प्रसीदतु ततः सदा दशमतिः सनारायणः"** ॥ इति॥

एवं विश्वगुरोः श्रीमध्वाचार्यस्य जीवनचरितमधिकृत्य कविना नारायणपण्डितेन त्रयः ग्रन्थाः विरचिताः ।

अयमाशयः – लिकुचकुलान्वयजाः सर्वेऽपि मध्वचरितं ग्रन्थं चक्रुः । सर्वेषां ग्रन्थेषु एकता विद्यते । केषुचन ग्रन्थेषु अर्थव्यत्यासः–प्रमेयव्यत्यासः–चारित्रिकव्यत्यासः दृश्यते । परन्तु एतेषां लिकुचकुलीनानां ग्रन्थेषु तथा नास्ति इत्येव विशेषता ।

## श्रीवेदाङ्गतीर्थकृता पदार्थदीपिका

परमपूज्यः श्रीवेदाङ्गतीर्थः श्रीविष्णुतीर्थपरम्परायां त्रयोदशः यतिः । श्रीवेदाङ्गतीर्थः महान् तपस्वी आसीत् । श्रीमध्वविजयस्य पदार्थदीपिका इति तदीया टीका । इयञ्च टीका अतिप्राचीना । अतीव सरळा नातिविस्तरा । मङ्गळाचरणे –

**"श्रीमदानन्दतीर्थार्यपदाब्जं प्रणमाम्यहम् ।**

**वृत्तिं मधुकृतां यत्र वसन्तीन्द्रादयः सुराः ॥**

**त्रिविक्रमार्यपुत्रेण नारायणविपश्चिता ।**

**कृतं श्रीमध्वविजयं विवृणोमि यथामति"** इति स्वाभिप्रायं अकथयत् ।

## अन्ते टीकां उपसंहरन्

**श्रीमध्वमुनिप्रबर्हविलसच्चित्तारविन्दालयः**

**सान्द्रानन्दचिदादिसद्गुणतनुः दोषातिदूरः सदा ।**

**ब्रह्माहीन्द्रसुरेन्द्रपूर्वविबुधैः आराधिताङ्घ्रिद्वयः**

**सुप्रीतो भवतात् सदा मम हरिर्भक्तेष्टचिन्तामणिः ॥** इति स्तौति ।

## श्रीवेदाङ्गतीर्थकृतयः –

1. पदार्थदीपिका [श्रीमध्वविजयव्याख्यानरूपा टीका]
2. श्रीमन्महाभारततात्पर्यनिर्णयलघुटीका
3. ऐतरेयभाष्यटीका
4. श्रीमद्भगवद्गीताटीका [अनुपलब्धा]

## श्रीविश्वपतितीर्थविरचिता पदार्थदीपिकोद्बोधिका

परमपूज्यः श्रीविश्वपतितीर्थः श्रीअधोक्षजतीर्थसंस्थाने आसीत् । अस्मिन् संस्थाने विंशतितमः यतिः । परमपूज्यः अयं महान् तपस्वी टिप्पणिकारश्च आसीत् । अस्य शैली सरळा सुन्दरा व्याकरणसम्बद्धा च ।

## श्रीविश्वपतितीर्थस्य कृतयः

1. पदार्थदीपिकोद्बोधिका
2. द्वादशस्तोत्रटीका.
3. सङ्ग्रहरामायणटीका
4. मणिमञ्जरीटीका
5. पञ्चस्तुतिटीका
6. ब्रह्मपारस्तोत्रटीका
7. चतुर्दशस्तोत्रटीका
8. श्रीविजयध्वजाष्टकम् ।

श्रीवेदाङ्गतीर्थकृतपदार्थदीपिकां अनुसरन्तीं "पदार्थदीपिकोद्बोधिका" नाम्नीं टीकां व्यरचयत् । मध्वविजयाध्येतॄणां अत्युपयुक्ता टीका । टीकायां स्वयमेव –

**"श्रीवेदाङ्गमुनिविरचितश्रीमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ"**

इति उदघुष्यत ।

ग्रन्थादौ –

**“श्रीमन्तं विठ्ठलं नत्वा पूर्णबोधेष्टदैवतम् ।**

**श्रीमध्वविजयव्याख्यादीपमुद्बोधयाम्यहम्”** इति मङ्गळाचरणम् ।

**उपसंहारे च –**

**“स्तयन्धयानां कृतिवद्व्यस्तेयं सुकृतेः कृतिः ।**

**तथा भूयात्पितृवद्बुधानां तोषकारिणी”** इति ।

## श्रीरघुवर्यतीर्थकृता सौरभप्रकाशिका

श्रीपलिमारुमठ इति प्रथितस्य श्रीहृषीकेशतीर्थसंस्थानस्य परम्परायां प्रातःस्मरणीयः श्रीरघुवर्यतीर्थः इति आसीत् । असौ सौरभप्रकाशिका इति प्रमेयनवमालिकायां उपरि विस्तृतटीकाग्रन्थं चकार । ग्रन्थेस्मिन् मूलस्य अपूर्वमर्थं विवृणोति । विवरणशैली च मनोज्ञा वर्तते ।

**“रामं सीतापतिं नत्वा पूर्णबोधान् गुरूनपि ।**

**विवृणोमि यथाबोधं प्रमेयनवमालिकाम्”** मङ्गळाचरणश्लोकः ।

**“सुमध्वागमपीयूषं मां योपाययदाशु तम् ।**

**रघूत्तममुनिं वन्दे परमं गुरुमन्वहम् ॥**

**गुणांशुतोषिणः सन्तो दोषराशेरुपेक्षकाः ।**

**विदाङ्कुर्वन्तु विद्वांसः रघुवर्ययतेः कृतिम् ॥**

**हयास्यरूपिणे शङ्खज्ञानमुद्रादिधारिणे ।**

**अनिष्टहारिणे भक्तरक्षिणे चक्रिणे नमः”**

इति उपसंहारे निरूपितम् ।

**छलारीशेषाचार्यकृता मन्दोपकारिणी**

गोदावरीप्रदेशे पुरुषोत्तमाचार्यस्य सुपुत्रः छलारी शेषाचार्यः इति महान् विद्वान् आसीत् । श्रीउत्तरादिमठाधीशाः श्रीसत्यनिधितीर्थाः दीक्षागुरवः । छलारीवंशः द्वैतवाङ्मये अद्वितीयया वाङ्मयसेवया सुप्रसिद्धो वर्तते । तद्वंशस्य प्रसिद्धः छलारी नरसिंहाचार्यः श्रीशेषाचार्यस्य विद्यागुरुः । छलारी नरसिंहाचार्यः[क्रि.श 1650–1725] उद्दामपण्डितः, प्रतिभाशाली च आसीत् । अयमेव मन्दोपकारिणी इति मध्वविजयटीकां चकार । वैशिष्ट्यपूर्णा टीका इयं । आदौ मङ्गळं कुर्वन् स्वोद्देशं विवृणोति –

**"लक्ष्मीनारायणं देवं व्यासमध्वजयादिकान् ।**

**गुरून् मूलादिपरमान् वन्दे विद्यागुरून् मम ॥**

**छलारीनरसिंहार्यशिष्यः शेषाभिधो बुधः ।**

**प्रवक्ति मध्वविजयं मन्दोपकृतये स्फुटम्"** ॥ इति ॥ उपसंहारे च स्वयमेव स्वगुरोः स्वस्य तथा स्वकृतग्रन्थस्य च परिचयं कुर्वन्

**"इत्थं सत्यनिधिच्छलारिनरसिंहाचार्यशिष्येण वै**

**शेषाख्येन विपश्चिता विरचिता मन्दोपकारिण्यलम् ।**

**टीका सर्वगुरूच्चमध्वविजयाख्यानस्य काव्योत्तम–**

**ग्रन्थस्येष्टदमद्गुरूत्तमहृदिस्थे स्यात्तु कृष्णेर्पिता"** इति निर्दिष्टवान् ।

## छलारी शेषाचार्यस्य कृतयः

1. तन्त्रसारार्थसङ्ग्रहः
2. मन्दोपकारिणी [मध्वविजयटीका]
3. मन्दोपकारिणी [मणिमञ्जरीटीका]
4. नखस्तुतिटीका
5. वायुस्तुतिटीका
6. अणुभाष्यटीका

7. मन्दबोधिनी [श्रीमद्भागवत अष्टमस्कन्धटीका]

8. मन्दबोधिनी [श्रीमद्भागवत नवमस्कन्धटीका]

9. श्रुतिगीताव्याख्या

10. तात्पर्यनिर्णयटीका

11.मन्त्रप्रकाशिका

12.प्रमाणचन्द्रिका

13.ईशावास्योपनिषद्भाष्यटीका

14. षट्प्रश्नोपनिषद्भाष्यटीका

15. सुशब्दप्रदीपः

16. निर्णयरत्नम्

17.लघुतिथिनिर्णयः

18. प्रमेयसङ्ग्रहः

19. आशौचनिर्णयः

20. गङ्गास्तोत्रम्

21.छलारीनरसिंहाचार्यस्तुतिः

22. तत्वसङ्ख्यानटीकाटिप्पणी ।

## श्रीआनन्दतीर्थाचार्यकृत पदार्थप्रकाशिका

श्रीआनन्दतीर्थाचार्यः इति श्रीराघवेन्द्रतीर्थश्रीपादानां पूर्वाश्रमस्य बन्धुः । अयं कविः श्रीराघवेन्द्रविजयकाव्यस्य कर्तुः श्रीनारायणाचार्यस्य सहोदरः । पदार्थप्रकाशिकायां प्रतिसर्गस्य प्रतिश्लोकस्य च अलङ्कारविवरणं निरूपितं वर्तते । अभ्यासार्थं आनुकूल्यं भवति ।

**एवमेव श्रीछलारी नरसिंहाचार्यः अपि व्याख्यानं अकरोत् । श्रीमुद्गल आनन्दतीर्थाचार्यः व्याख्यानं चकार इति प्रतीतिः । श्रीलिङ्गेरी व्यासाचार्योऽपि व्याख्यानं चकार इत्यपि प्रतीतिः । परन्तु एतेषां ग्रन्थानां हस्तप्रतयः एतावत्पर्यन्तं नोपलब्धाः । लब्धाः चेत् महदुपकारं भवति जिज्ञासुजनानाम् ।**

## महाकाव्येऽस्मिन् वर्तमानाः संशोधकविषयाः

1. श्रीमध्वविजये एकादशसर्गे वैकुण्ठवर्णनं वर्तते । बहुविस्तृतं विवरणम् । अस्मिन् सर्गे एकोनाशीतिश्लोकेषु वैकुण्ठस्य तत्रत्यमुक्तानाञ्च वर्णनं अस्ति ।

   **ननु तत्र विश्वविभवैकपदं प्रतिभाति पूर्णपुरुषस्य पुरी ।**

   **उपलभ्यते यदुपमानपदं प्रतिबिम्बमेव मणिवप्रगतम्** [मध्व.11.7]

   वैकुण्ठलोकस्य चित्रणं मनोज्ञं चित्रितम् । श्रीमद्भागवते महापुराणेऽपि वैकुण्ठस्य वर्णनं वर्णितम् । एतयोः तौलनिकं अध्ययनम् कर्तुं अवकाशः वर्तते । अतः

   **"मध्वविजयमहाकाव्ये तथा श्रीमद्भागवतमहापुराणे**

   **वर्णितस्य वैकुण्ठवर्णनस्य तौलनिकं अध्ययनम्"** इति ।

2. श्रीमध्वविजये अनेकवृत्तानां विवरणं वर्तते । उदा– उपजाति–द्रुतविलम्ब–रथोद्धता–मञ्जुभाषिणी–पथ्यावक्र–मालिनी–स्रग्धरा–आर्या–शालिनी–वसन्ततिलका इत्यादयः वृत्ताः सन्ति अस्मिन् काव्ये । तथैव अलङ्काराः सन्ति । तथैव श्रीवादिराजश्रीपादाः रुक्मिणीशविजये महाकाव्ये काव्यलक्षणानुगुणं विविधवृत्तैः वर्णनं चकार । अलङ्कारस्य वृत्तस्य च ज्ञानं अध्ययनार्थं अत्युपयुक्तम् । अतः

   **श्रीमध्वविजयमहाकाव्ये तथा रुक्मिणीशविजयमहाकाव्ये**

   **निरूपितानां वृत्तानां अलङ्काराणां तौलनिकं अध्ययनम्"** इत्यस्मिन् विषये अवकाशः अस्ति ।

3. संस्कृतवाङ्मये तौळवमण्डलस्य उपायनं महत्वपूर्णम् अपूर्वञ्च । अस्मिन् प्रदेशे अनेके यतयः अनेके गृहस्थाः संस्कृतक्षेत्रं श्रीमन्तं अकुर्वन् । तेषां नामाऽपि इदानीं न श्रुण्मः । तेषां कृतयः अपि अप्रकटिताः । अतः तेषां उपकारस्मरणार्थं विशेषाध्ययनं भवितव्यम् ।

**"संस्कृतवाङ्मये तौळवमण्डलजानां उपायनम्"**

इत्यस्मिन् विषये विशेषाद्ययनार्थं अवकाशः वर्तते ।

4. लिकुचवंशजाः सर्वे कवयः । तौळवमण्डलस्य भूषणाः । एतेषां योगदानं अधिकृत्य विशेषाध्ययनं कर्तुं शक्यते ।

**"लिकुचवंशजानां परिचयः कृतिश्च" इत्यस्मिन् विषये विमर्षात्मकं अध्ययनम्"** इति ।



# चित्रमञ्जरी

## श्रीकृष्ण मठः


1


2

## श्रीकृष्णः

**गोपिकाप्रणयिनः श्रियःपतेः आकृतिं दशमतिः शिलामयीम् [मध्व.9.41]**



3



4

**सङ्क्रमणसप्तोत्सवः – श्रीकृष्ण मठः**

मध्वप्रदत्ताक्षयपात्रम् श्रीकृष्णमठः



5



6

सर्वज्ञसिंहासनम्

## श्रीअनन्तेश्वरः [उडुपि]

## नारायणं कुलपतिं शरणं विधेम [मध्व.2.18]




7



8

गजपृष्ठाकारे विराजमानः श्रीअनन्तेश्वरदेवालयः [उडुपि]

## श्रीअनन्तेश्वरध्वजस्तम्भः [उडुपि]

## उत्तुङ्गकेतुशिखरे स कृताङ्घ्रहारो [मध्व.2.2]



9



10

**मध्वसन्निधिः**



11

**तौळवमण्डलस्य अधिपतिः परशुरामः । पाजकक्षेत्रम्**



12

**वरविमानगिरावपि चण्डिका [मध्व.3.17]**

# विमानगिरिः

क्षेत्रं स पाजकपदं त्रिकुलैककेतुः [मध्व.2.11]



13



जन्मभूमिः पाजकम् 14

## पाजकक्षेत्रे वासुदेवतीर्थम्



15

## पाजके अक्षराभ्यासशिला

**लिपिकुलं ननु तात गते दिने लिखितमेव पुनर्लिखितं कुतः** [मध्व.3.19]



16

## पितुः ऋणमोचनम्

## बीजच्छलेन पुरुषार्थमहो विशिष्टम् [मध्व.2.52]



17

## कुञ्जित्तायगृहम्



18

## नयम्पळ्ळि

## “प्रतियये प्रभुणा घृतवल्यपि” [मध्व.3.21]



19

## पूगवनान्वयजो द्विजस्य गुरुकुले दण्डतीर्थनिर्माणम्



20

**प्रेतपीडापरिहारप्रदेशः – सन्दळिगेपाडि, अलेवूरु**

**"दोषेयुषाम् समवनेन वनेऽतिभीमे तत्क्रीडितग्रह इहैकतमं तुतोद"** [मध्व.2.33]



21

**मध्वसरोवरः**

**"इतस्तृतीये दिवसे द्युनिम्नगा त्वदर्थमास्माकतटाकमाव्रजेत्" [मध्व.4.41]**



22

## कार्नूरुमठः

### ग्रामवरेमठान्तरे [मध्व..4.19]



23

### मध्वप्रदत्तः श्रीकृष्णः [कार्नूरुमठः]



24

श्रीअच्युतप्रज्ञार्यपूजितः श्रीउमामहेश्वरः [कार्नूरुमठः]



25



पाण्डवप्रतिष्ठितपञ्चमूर्तयः पारन्तीक्षेत्रम् 26

पारन्तीसुरसदनं विशालसंवित् स प्रायात् [मध्व.16.36]




27

मध्वकट्टे [मध्यवाटमठस्य समीपे ]



28

## उजिरेक्षेत्रम्

स ग्रामम् परमभियात उच्चभूतिम् [मध्व.16.41]



29

## एर्किमठः

आयास्यन् किल सरिदन्तराख्यदेशम् [मध्व.16.38]

मध्वप्रदत्ततप्तमुद्राद्वयम् – एर्कीमठः



30

श्रीमध्वपूजितलक्ष्मीकेशवः एर्कीमठः



31

आयास्यन् किल सरिदन्तराख्यदेशम् [मध्व.16.38]



32

## वर्काडि श्रीविष्णुमूर्तिदेवालयः

न्यवसदमरधिष्ण्ये प्राग्ग्रवाटाभिधाने [मध्व.12.54]



33

## कोक्कडक्षेत्रम्



34

## कळसग्रामः



35

## बदरीक्षेत्रम्




36

## विष्णुमङ्गलम्

### मण्डितविष्णुमङ्गलं विष्णुं जगन्मङ्गलमाननाम सः [मध्व.5.30]



37

## कण्वतीर्थम्

### अष्टमठेषु द्वन्द्वमठस्थापनप्रदेशः



38

## कोक्कड वैद्यनाथेश्वरदेवालयः

क्षेत्राग्र्यं त्रिभुवनवैद्यनाथनाथं प्रस्थाय [मध्व.16.40]



41

## कटत्तिल मठः

सर्वमूलग्रन्थानां पावनसन्निधिः



42

अभेद्यसम्पुटः श्रीसुब्रह्मण्य मठः [कुक्के सुब्रह्मण्यमठः]



43

कावूमठः



44

मध्व–त्रिविक्रमयोः समागमप्रदेशः

## कावुमठः



45

## श्रीत्रिविक्रमपण्डिताचार्यस्य वृन्दावनसन्निधानम् – कावूमठः



46

## मुत्तिगे ग्रामः



47

## श्रीमुष्णम् – दण्डतीर्थम्



48

ग्रन्थकर्तुः श्रीनारायणपण्डिताचार्यस्य वृन्दावनम्–कावूमठः



49

मध्वविजयस्तम्भः – कावुमठः



50

## शिलालेखः




51

## जनमॆजय शासनम् – भीमन कट्टे मठः



52

## यज्ञनारायणमठः



53

## वार्ताविचारः



ಮಧ್ವಾಚಾರ್ಯ ಶ್ರೇಷ್ಠ ದಾರ್ಶನಿಕ

■ ಜ್ಞಾನ ಪ್ರಸಾರಕ್ಕೆ ದೇಶ ಸಂಚಾರ ■ ಕುರುಹುಗಳ ಅಧ್ಯಯನ ಅವಶ್ಯ

ಸಕಾಲದಲ್ಲಿ ನೀರು

ಸಹಕಾರ ಸಂಘಗಳಿ

54

# परिशिष्टम्

## ग्रन्थानुसन्धानम्

श्रीनारायणपण्डिताचार्यः श्रीमध्वविजयं नाम महाकाव्यं चकार । काव्यमिदं केवलं शब्दानां वैभवे न पर्यवसानं अनुभवति । किन्तु मानवानां अत्युपयोगमपि विधास्यति । मध्वविजयस्य अनुसन्धाननियमेन अध्ययनं भवति चेत् काव्यस्यास्य प्रभावेनैव अनेके समस्याः परिहृता भवन्ति ।

तथा हि – जीवने सामान्यतः सर्वे प्रेतबाधेन–वातबाधेन–पिशाचबाधेन सन्तप्ताः सन्ति । तेषां उद्धरणाय ग्रन्थोऽयं प्रवर्तते । सन्दळिकेपाडि प्रदेशे दुर्गासन्निधाने सायम् दीपज्वलनं कुर्वन्ति चेत् सर्वबाधानिवृत्तिः निश्चयेन भवति ।

कोक्कडक्षेत्रे वैद्यनाथेश्वरः अनुग्रहं कुर्वन् वर्तते । तस्यैव अनुग्रहेण तत्रत्य सरोवरे सर्वरोगनिवारणशक्तिः वर्तते । अत एव स्नानं तत्र करणीयम् । स्नात्वा वैद्यनाथं नमस्कारं कुर्वन्ति चेत् आरोग्यसंरक्षणं भवति । एवमेव अनेकेषु क्षेत्रेषु अनुसन्धानक्रमेण चिन्तनं कृत्वा यात्रा करणीया । तदानीमेव यात्रा सफला भवति ।

## सूक्तयः

काव्यमिदं मित्रमिव सुवाचा मनःपरिवर्तनं करोति । काव्ये नीतिबोधकाः सूक्तयः सन्ति । तेषु काश्चन सूक्तयः सङ्गृहीतः ।

1. किन्तूत्तमश्लोकशिखामणीनां वनो विशुद्ध्यै चरितानुवादः । [1.7]
2. त्राता य एव नरकात् स हि पुत्रनामा । [2.17]
3. दानं धृवं फलति पात्रगुणानुकूल्यात् । [2.30]
4. नतिर्न शुश्रूषु जनाय सस्यते । [3.17]
5. न पुत्रमित्रोः अवनं विना शुभं वदन्ति सन्तः । [3.22]
6. यदा विरक्तः पुरुषः प्रजायते तदैव सन्न्यासविधिः । [3.23]

7. गुणाब्धिलुब्धः सुजनः प्रसीदति । [5.23]

8. भाग्यदैवमिह योग्यतानुगम् । [9.22]

9. विनयो हि भूषयति सर्वरसम् । [11.54]

10. सिद्धये स्याद्धि यत्नः । [14.21]

एवमेव अनेके श्लोकाः नीतिबोधकाः सन्ति । सुवचनेनैव मनो विकासः भवति ।



# सहायकग्रन्थानां विवरणम्

| ग्रन्थनाम | ग्रन्थकर्ता | प्रकाशक | प्रकाशनकाल |
|---|---|---|---|
| श्रीमध्वविजय [संस्कृतम्] | डा.बन्नञ्जे गोविन्दाचार्य | ईशावास्यप्रतिष्ठानम्, उडुपि | 2003 |
| ಶ್ರೀಮಧ್ವವಿಜಯ. | ಡಾ.ಬನ್ನಂಜೆ ಗೋವಿಂದಾಚಾರ್ಯ | ಈಶಾವಾಸ್ಯಪ್ರತಿಷ್ಠಾನಮ್, ಉಡುಪಿ | 2015–16 |
| सुमध्वविजय [संस्कृतम्] | डा.एस्.आर्.पाण्डुरङ्गी | द्वैतवेदान्ताध्ययनसंशोधन प्रतिष्ठानम्.बेङ्गळूरु | 2013 |
| अणुभाष्यम् [संस्कृतम्] | पं.आर्.जि.माळगि | प्रच्यविद्यासंशोधनालयः. मैसूरु | |
| ಪೂರ್ಣಪ್ರಜ್ಞದರ್ಶನ | ಡಾ.ವ್ಯಾಸನಕೆರೆ ಪ್ರಭಂಜನಾಚಾರ್ಯ | ಶ್ರೀವ್ಯಾಸಮಧ್ವಸಂಶೋಧನ ಪ್ರತಿಷ್ಠಾನ, ಬೆಂಗಳೂರು | 2014 |
| ಆಚಾರ್ಯ ಮಧ್ವರು | ಡಾ. ಬನ್ನಂಜೆ ಗೋವಿಂದಾಚಾರ್ಯ | ಈಶಾವಾಸ್ಯಪ್ರತಿಷ್ಠಾನಮ್, ಉಡುಪಿ | |
| ಸುಗುಣಮಾಲಾ ಕನ್ನಡ ಮಾಸಪತ್ರಿಕೆ | | ಶ್ರೀಪುತ್ತಿಗೆ ಮಠ, ಉಡುಪಿ | |
| ತುಳುನಾಡಿನಲ್ಲಿ ಮಧ್ವಪರ್ಯಟನೆ | ಪಾವೂರು ರಾಮಚಂದ್ರ ಅಮ್ಮಣ್ಣಾಯ | ಉಡುಪಿ | 2000 |
| ತುಳುನಾಡಿನ ಕವಿಗಳು | ಡಾ. ನಿಟಿಲಾಪುರ ಕೃಷ್ಣಮೂರ್ತಿ ಆಚಾರ್ಯ | | 2010 |
| ಕೃಷ್ಣನ ಉಡುಪಿ | ಡಾ. ಬನ್ನಂಜೆ ಗೋವಿಂದಾಚಾರ್ಯ | ಈಶಾವಾಸ್ಯಪ್ರತಿಷ್ಠಾನಮ್, ಉಡುಪಿ | 2010 |
| ಸಂಪ್ರದಾಯಪದ್ಧತಿ | ಡಾ.ವ್ಯಾಸನಕೆರೆ ಪ್ರಭಂಜನಾಚಾರ್ಯ | ್ರೀವ್ಯಾಸಮಧ್ವಸಂಶೋಧನಪ ್ರತಿಷ್ಠಾನ, ಬೆಂಗಳೂರು. | 2002 |
| ಶ್ರೀಮಣಿಮಂಜರೀ | ವಿದ್ವಾನ್ ಕೆ.ಸತ್ಯನಾರಾಯಣಾಚಾಯ ರ್ | ಬೆಂಗಳೂರು ಶ್ರೀಸಮೀರ– ಸಮಯಸಂಜೀವಿನೀ ಪ್ರತಿಷ್ಠಾನ, ಬೆಂಗಳೂರು | 2010 |
| न च मध्व समो गुरु | ವಿದ್ವಾನ ಅನಂತಕೃಷ್ಣಾಚಾರ್ಯ | ಶ್ರೀ ಮಾಧ್ವದರ್ಶನ ಪ್ರಕಾಶನ, ಉಡುಪಿ | 2017 |
| “तत्वमुक्तावल्याः | डा.नीलकण्ठपति | उत्कलप्रदेश | 1992 |

| | | | |
|---|---|---|---|
| समीक्षणात्मकं सम्पादनम्" | | | |
| श्रीसर्वमूलग्रन्था [संस्कृतम्] | पं.गङ्गूर मध्वाचार्य | | |
| प्रज्ञा [शोधप्रबन्धपुस्तकम्–7] | | पूर्णप्रज्ञसंशोधनमन्दिरम् बेङ्गलूर् | 2012 |
| "दर्शनसाहित्यक्षेत्रे कर्नाटकस्य योगदानम्" | डा.एच्.वि.नागराज राव् | पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूर् | 2013 |
| ತರಂಗ ವಾರಪತ್ರಿಕೆ [ಪರ್ಯಾಯ ವಿಶೇಷಾಂಕ–2014] | | ಮಣಿಪಾಲ್ | 2014 |
| ಬ್ರಹ್ಮರಥ | ಡಾ.ರಾಮನಾಥಾಚಾರ್ಯ | ಉಡುಪಿ. ತು.ಶಿ.ಮಾ.ಮ ಉಡುಪಿ | 2014 |
| ಕೃಷ್ಣಾರ್ಚನೆ ಪರ್ಯಾಯ ವಿಶೇಷಾಂಕ–2018 | | ವಿಜಯ ಕರ್ನಾಟಕ, ಉಡುಪಿ | 2018 |
| ಕ್ರೋಡಸ್ಮರಣೆ. ಬ್ರಹ್ಮಕಲಶೋತ್ಸವದ ಸ್ಮರಣಸಂಚಿಕೆ–2002 | | ಕೊಡವೂರು ದೇವಸ್ಥಾನ, ಉಡುಪಿ | 2002 |
| ಅಷ್ಟಮಠದ ಯತಿವರರು | ಶ್ರೀ.ಕೆ.ಎಸ್.ವಾದಿರಾಜ | ಶ್ರೀ.ಎಚ್.ವಿ.ಗೌತಮ. ಬೆಂಗಳೂರು | 2011 |
| ಬ್ರಹ್ಮರಥ | ಡಾ. ರಾಮನಾಥ ಆಚಾರ್ಯ | ತು.ಶಿ.ಮಾ.ಮ ಉಡುಪಿ | 2014 |
| "मतत्रयरीत्या बिम्बप्रतिबिम्बभावः" | डा.ए.वि.नागसम्पिगे | पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूर् | |
| मध्वसिद्धान्तसार | डा.रामचन्द्राचार् माळगि | द्वैतवेदान्ताध्ययनसंशोधन प्रतिष्ठानम्. बेङ्गळूरु | |
| ಬನ್ನಂಜೆ ಬರಹಗಳು | ಡಾ.ಬನ್ನಂಜೆ ಗೋವಿಂದಾಚಾರ್ಯ | ಉಡುಪಿ | |
| ಕ್ರೋಡಸ್ಮರಣೆ ಬ್ರಹ್ಮಕಲಶೊತ್ಸವದ ಸ್ಮರಣಸಂಚಿಕೆ | | ಕೊಡವೂರು ದೇವಸ್ಥಾನ | 2002 |
| ಸರ್ವಮೂಲ ಕನ್ನಡ | | ಶ್ರೀಪಲಿಮಾರು ಮಠ | |

| | | | |
|---|---|---|---|
| ಮಾಸಪತ್ರಿಕೆ | | | |
| ಸುಗುಣಮಾಲಾ ಕನ್ನಡ ಮಾಸಪತ್ರಿಕೆ | | ಶ್ರೀಪುತ್ತಿಗೆ ಮಠ, ಉಡುಪಿ | |
| ಅಷ್ಟಮಠದ ಯತಿವರರು. | ಶ್ರೀ ಕೆ.ಎಸ್. ವಾದಿರಾಜ್ | .ಬೆಂಗಳೂರು | 2011 |
| ದಕ್ಷಿಣ ಕನ್ನಡ ದೇವಾಲಯಗಳು. | ಡಾ.ಮುರಳೀಧರ ಉಪಾಧ್ಯ. | ಶ್ರೀಜನಾರ್ದನ ಮತ್ತು ಮಹಾಕಾಳಿ ದೇವಸ್ಥಾನ. ಅಂಬಲಪಾಡಿ ದೇವಸ್ಥಾನ. ಉಡುಪಿ. | 2000 |
| ಉಡುಪಿ ಇತಿಹಾಸ | ಡಾ.ಪಿ.ಗುರುರಾಜ ಭಟ್ | ಬೆಂಗಳೂರು | 1971 |
| ಅಡೂರುಕ್ಷೇತ್ರ ಪರಿಚಯ | | ಶ್ರೀಮಹಾಲಿಂಗೇಶ್ವರ ದೇವಸ್ಥಾನ. ಅಡೂರು. | 1989 |
| ದಕ್ಷಿಣ ಕನ್ನಡದ ಪುಣ್ಯಕ್ಷೇತ್ರಗಳು | ಎಸ್.ಶ್ರೀನಿವಾಸ ತಂತ್ರಿ. | ಯುಗಪುರುಷ. ಕಿನ್ನಿಗೋಳಿ | 1989 |
| ಉಡುಪಿ ಇತಿಹಾಸ–ವರ್ತಮಾ ನ | ಡಾ.ಬನ್ನಂಜೆ ಗೋವಿಂದಾಚಾರ್ಯ | ಪರ್ಯಾಯ ಪೇಜಾವರ ಮಠ. | 1984 |
| ತುಳುನಾಡಿನ ಇತಿಹಾಸ | ಡಾ.ಕೆ.ವಿ.ರಮೇಶ್ | | 1969 |
| ಸಪ್ತಕ್ಷೇತ್ರಗಳು. | ಡಾ.ಪಿ.ಗುರುರಾಜ ಭಟ್ ಬೆಂಗಳೂರು. | “ರಾಯಭಾರಿ” ಉಡುಪಿ. | 1971 |
| ಶಿವಳ್ಳಿಯ ಧಾರ್ಮಿಕ ಇತಿಹಾಸ. | ಡಾ.ಪಿ.ಗುರುರಾಜ ಭಟ್ | “ವಿದ್ಯಾ” ಬೆಂಗಳೂರು | 1969 |
| ಭಾವಿಸಮೀರ ಶ್ರೀಮದ್ವಾದಿರಾಜ ಗುರುಸಾರ್ವಭೌಮರು | ಡಾ.ನಿಪ್ಪಾಣಿ ಗುರುರಾಜಾಚಾರ್ | ಬಳ್ಳಾರಿ | 2003 |
| ಮಧ್ವಸಿದ್ಧಾಂತ | ಡಾ.ವ್ಯಾಸನಕೆರೆ ಪ್ರಭಂಜನಾಚಾರ್ಯ | ಶ್ರೀವ್ಯಾಸಮಧ್ವಸಂಶೋಧನ ಪ್ರತಿಷ್ಠಾನ.ಬೆಂಗಳೂರು | 2013 |
| ಸರ್ವಮೂಲ ಆದ್ಯಂತಶ್ಲೋಕಗಳು | ಎ.ವಿ.ಶ್ಯಾಮಾಚಾರ್ಯ | ಶ್ರೀಮಾಧ್ವಗ್ರಂಥ ಪ್ರಕಾಶನ. ಬೆಂಗಳೂರು | 2009 |
| ಕ್ಷೇತ್ರವೈಭವಮ್ | ಡಾ.ಎನ್.ವೆಂಕಟೇಶಾರ್ಯ | ಹಯಗ್ರೀವ ಪ್ರಕಾಶನ. ಬೆಂಗಳೂರು | 2004 |
| ಶ್ರೀಮನ್ಮಹಾಭಾರತತಾತ್ಪರ್ಯ ನಿರ್ಣಯಃ | ಅಗ್ರಹಾರ ನಾರಾಯಣ ತಂತ್ರಿಗಳು | ಉಡುಪಿ | 2015 |

# श्रीमध्वविजयमहाकाव्योक्ततीर्थक्षेत्रमीमांसा

## ಶ್ರೀ ಮಧ್ವವಿಜಯ ಮಹಾಕಾವ್ಯೋಕ್ತ ತೀರ್ಥಕ್ಷೇತ್ರ ಮೀಮಾಂಸಾ

तुमकूरु विश्वविद्यालयस्य

**Ph.D उपाध्यर्थं समर्पितः महाप्रबन्धः**


## अनुसन्धाता

बि.गोपालाचार्

**Rig No – 13SA-ET007**

## मार्गदर्शकः

डा.श्रीधर एन् भट्टः

श्रीधर्मस्थळमञ्जुनाथेश्वरसंशोधनकेन्दम्

[तुमकूरुविश्वविद्यालयेन मानितम्]

[स्वायत्तः] उजिरे, कर्नाटक ५७४२४०





# तुमकूरु विश्वविद्यालयः

## तुमकूरु –५७२१०३

**2018**

# पञ्चमोऽध्यायः

श्रीमध्वविजयमहाकाव्यस्य व्याख्यानपरम्परा -

महाकाव्येऽस्मिन् वर्तमानाः संशोधकविषयाः ।

चित्रमञ्जरी – परिशिष्टम् – सहायकग्रन्थानां विवरणम्

# पञ्चमोऽध्यायः

## श्रीमध्वविजयमहाकाव्यस्य व्याख्यानपरम्परा

श्रीनारायणपण्डिताचार्यः श्रीमध्वविजयं नाम महाकाव्यं प्रणिनाय । षोडशसर्गात्मकं महाकाव्यमिदं विरचय्य चारित्रिककाव्यपरम्परायाः चालनं अकरोत् । श्रीमध्वाचार्यस्य समक्षमे एव निर्मितमिदमिति काव्यस्यास्य महत्वम् । एतादृशं चारित्रिककाव्यम् काव्यप्रपञ्चे एव दुर्लभम् । अयमेव काव्यस्यास्य टीकाग्रन्थद्वयमपि अकरोत् । तत्र प्रमेयनवमालिका इति एका, भावप्रकाशिका इति अपरा । मध्वविजये अनुक्तानां प्रदेशानां नाम विवरणञ्च अत्र प्रतिपादितम् । तत्र प्रथमा प्रमेयनवमालिका मध्वविजयकाव्यस्य सङ्क्षेपस्वरूपः ग्रन्थः । नित्यपारायणोपयुक्तश्च । अत एव अस्य नाम "अणुमध्वविजयः" इति । मध्वविजयस्य प्रतिसर्गं द्वाभ्यां द्वाभ्यां पद्याभ्यां अवर्णयत् । ग्रन्थस्य उपसंहारे –

**"दशप्रमतिविक्रमं बहुविधात्मना हेमवत्**

**स मध्वविजयाभिदं व्यधित भावदीपाह्वयम् ।**

**प्रमेयनवमालिकां पुनरिमां च दक्षाञ्चितां**

**सतां श्रवणभूषणं व्यदधदेष नारायणः** ॥" इति काव्यस्य स्वरूपं अब्रवीत् ।

अस्याः प्रमेयनवमालिकायाः वैशिष्ट्यं श्रीरघुवर्यतीर्थश्रीमच्चरणैः सौरभप्रकाशिकायां स्फुटं वर्णितम् ।

अस्य काव्यस्य अन्या लघुटीका भावप्रकाशिका इति । अस्यां टीकायां अपूर्वाः विषयाः निरूपिताः । अस्याः टीकायाः आधारेणैव मध्वसन्दर्शितानां प्रदेशानां परिचयः भवति ।

**नमो जयात्मने यन्त्रे द्विजराजस्फुरच्छ्रिये ।**

**हरेरजस्य प्रिय ते हरये देवतात्मने** ॥ इति ग्रन्थस्य मङ्गळाचरणम् ।

उपसम्हारे तु स्वाभिप्रायं स्वपरिचयञ्च प्रकटीचकार ।

**"चर्या दृष्टा नरैः काश्चित् विस्मृता देवमायया ।**

**अविस्मृताश्च पुरुषैः नास्माभिः सकलाः श्रुताः ॥**

**श्रुताश्च काश्चिन्नैवोक्ताः देवगुह्यत्वनिश्चयात् ।**

**अन्यास्तथैव न प्रोक्ता ग्रन्थबाहुल्यभीतितः ॥**

**काव्यश्रिये वा गुरुकीर्तये वा**

**प्रोक्तं स्वयैवापि मनीषयेति ।**

**तस्मान्न शङ्क्येत महाजनेन**

**पुंसा कुशाग्रीयधियाप्यवश्यम् ॥**

**मन्दप्रबोधजनतोपकृतिं विधित्सुः**

**मध्वप्रसङ्गपरमोत्सवलम्पटोसौ ।**

**कृत्वापि मध्वविजयं व्यधितास्य किञ्चित्**

**भावप्रकाशनमिदं हरये नमोस्तु ॥**

**त्रिविक्रमविपश्चितो गुणनिधेः सुशिष्याः सुताः**

**सतामभिमतास्त्रयो यस्तृतीयोत्र नारायणः ।**

**स मध्वविजयं व्यधात् गुरुगिरा सदानन्ददः**

**प्रसीदतु ततः सदा दशमतिः सनारायणः"** ॥ इति॥

एवं विश्वगुरोः श्रीमध्वाचार्यस्य जीवनचरितमधिकृत्य कविना नारायणपण्डितेन त्रयः ग्रन्थाः विरचिताः ।

अयमाशयः – लिकुचकुलान्वयजाः सर्वेऽपि मध्वचरितं ग्रन्थं चक्रुः । सर्वेषां ग्रन्थेषु एकता विद्यते । केषुचन ग्रन्थेषु अर्थव्यत्यासः–प्रमेयव्यत्यासः–चारित्रिकव्यत्यासः दृश्यते । परन्तु एतेषां लिकुचकुलीनानां ग्रन्थेषु तथा नास्ति इत्येव विशेषता ।

## श्रीवेदाङ्गतीर्थकृता पदार्थदीपिका

परमपूज्यः श्रीवेदाङ्गतीर्थः श्रीविष्णुतीर्थपरम्परायां त्रयोदशः यतिः । श्रीवेदाङ्गतीर्थः महान् तपस्वी आसीत् । श्रीमध्वविजयस्य पदार्थदीपिका इति तदीया टीका । इयञ्च टीका अतिप्राचीना । अतीव सरळा नातिविस्तरा । मङ्गळाचरणे –

**“श्रीमदानन्दतीर्थार्यपदाब्जं प्रणमाम्यहम् ।**
**वृत्तिं मधुकृतां यत्र वसन्तीन्द्रादयः सुराः ॥**
**त्रिविक्रमार्यपुत्रेण नारायणविपश्चिता ।**
**कृतं श्रीमध्वविजयं विवृणोमि यथामति”** इति स्वाभिप्रायं अकथयत् ।

## अन्ते टीकां उपसंहरन्

**श्रीमध्वमुनिप्रबर्हविलसच्चित्तारविन्दालयः**
**सान्द्रानन्दचिदादिसद्गुणतनुः दोषातिदूरः सदा ।**
**ब्रह्माहीन्द्रसुरेन्द्रपूर्वविबुधैः आराधिताङ्घ्रिद्वयः**
**सुप्रीतो भवतात् सदा मम हरिर्भक्तेष्टचिन्तामणिः ॥** इति स्तौति ।

## श्रीवेदाङ्गतीर्थकृतयः –

1. पदार्थदीपिका [श्रीमध्वविजयव्याख्यानरूपा टीका]
2. श्रीमन्महाभारततात्पर्यनिर्णयलघुटीका
3. ऐतरेयभाष्यटीका
4. श्रीमद्भगवद्गीताटीका [अनुपलब्धा]

## श्रीविश्वपतितीर्थविरचिता पदार्थदीपिकोद्बोधिका

परमपूज्यः श्रीविश्वपतितीर्थः श्रीअधोक्षजतीर्थसंस्थाने आसीत् । अस्मिन् संस्थाने विंशतितमः यतिः । परमपूज्यः अयं महान् तपस्वी टिप्पणिकारश्च आसीत् । अस्य शैली सरळा सुन्दरा व्याकरणसम्बद्धा च ।

## श्रीविश्वपतितीर्थस्य कृतयः

1. पदार्थदीपिकोद्बोधिका
2. द्वादशस्तोत्रटीका.
3. सङ्ग्रहरामायणटीका
4. मणिमञ्जरीटीका
5. पञ्चस्तुतिटीका
6. ब्रह्मपारस्तोत्रटीका
7. चतुर्दशस्तोत्रटीका
8. श्रीविजयध्वजाष्टकम् ।

`श्रीवेदाङ्गतीर्थकृतपदार्थदीपिकां अनुसरन्तीं "पदार्थदीपिकोद्बोधिका" नाम्नीं टीकां व्यरचयत् । मध्वविजयाध्येतॄणां अत्युपयुक्ता टीका । टीकायां स्वयमेव –

**"श्रीवेदाङ्गमुनिविरचितश्रीमध्वविजयटीकाविवृतौ श्रीविश्वपतितीर्थकृतौ"**

इति उदघुष्यत ।

ग्रन्थादौ –

**“श्रीमन्तं विठ्ठलं नत्वा पूर्णबोधेष्टदैवतम् ।**

**श्रीमध्वविजयव्याख्यादीपमुद्बोधयाम्यहम्”** इति मङ्गळाचरणम् ।

**उपसंहारे च –**

**“स्तयन्धयानां कृतिवद्व्यस्तेयं सुकृतेः कृतिः ।**

**तथा भूयात्पितृवद्बुधानां तोषकारिणी”** इति ।

## श्रीरघुवर्यतीर्थकृता सौरभप्रकाशिका

श्रीपलिमारुमठ इति प्रथितस्य श्रीहृषीकेशतीर्थसंस्थानस्य परम्परायां प्रातःस्मरणीयः श्रीरघुवर्यतीर्थः इति आसीत् । असौ सौरभप्रकाशिका इति प्रमेयनवमालिकायां उपरि विस्तृतटीकाग्रन्थं चकार । ग्रन्थेस्मिन् मूलस्य अपूर्वमर्थं विवृणोति । विवरणशैली च मनोज्ञा वर्तते ।

**“रामं सीतापतिं नत्वा पूर्णबोधान् गुरूनपि ।**

**विवृणोमि यथाबोधं प्रमेयनवमालिकाम्”** मङ्गळाचरणश्लोकः ।

**“सुमध्वागमपीयूषं मां योपाययदाशु तम् ।**

**रघूत्तममुनिं वन्दे परमं गुरुमन्वहम् ॥**

**गुणांशुतोषिणः सन्तो दोषराशेरुपेक्षकाः ।**

**विदाङ्कुर्वन्तु विद्वांसः रघुवर्ययतेः कृतिम् ॥**

**हयास्यरूपिणे शङ्खज्ञानमुद्रादिधारिणे ।**

**अनिष्टहारिणे भक्तरक्षिणे चक्रिणे नमः”**

इति उपसंहारे निरूपितम् ।

### छलारीशेषाचार्यकृता मन्दोपकारिणी

गोदावरीप्रदेशे पुरुषोत्तमाचार्यस्य सुपुत्रः छलारी शेषाचार्यः इति महान् विद्वान् आसीत् । श्रीउत्तरादिमठाधीशाः श्रीसत्यनिधितीर्थाः दीक्षागुरवः । छलारीवंशः द्वैतवाङ्मये अद्वितीयया वाङ्मयसेवया सुप्रसिद्धो वर्तते । तद्वंशस्य प्रसिद्धः छलारी नरसिंहाचार्यः श्रीशेषाचार्यस्य विद्यागुरुः । छलारी नरसिंहाचार्यः[क्रि.श 1650–1725] उद्दामपण्डितः, प्रतिभाशाली च आसीत् । अयमेव मन्दोपकारिणी इति मध्वविजयटीकां चकार । वैशिष्ट्यपूर्णा टीका इयं । आदौ मङ्गळं कुर्वन् स्वोद्देशं विवृणोति –

**"लक्ष्मीनारायणं देवं व्यासमध्वजयादिकान् ।**
**गुरून् मूलादिपरमान् वन्दे विद्यागुरून् मम ॥**
**छलारीनरसिंहार्यशिष्यः शेषाभिधो बुधः ।**
**प्रवक्ति मध्वविजयं मन्दोपकृतये स्फुटम्"** ॥ इति ॥ उपसंहारे च स्वयमेव स्वगुरोः स्वस्य तथा स्वकृतग्रन्थस्य च परिचयं कुर्वन्

**"इत्थं सत्यनिधिच्छलारिनरसिंहाचार्यशिष्येण वै**
**शेषाख्येन विपश्चिता विरचिता मन्दोपकारिण्यलम् ।**
**टीका सर्वगुरूच्चमध्वविजयाख्यानस्य काव्योत्तम–**
**ग्रन्थस्येष्टदमद्गुरूत्तमहृदिस्थे स्यात्तु कृष्णेर्पिता"** इति निर्दिष्टवान् ।

## छलारी शेषाचार्यस्य कृतयः

1. तन्त्रसारार्थसङ्ग्रहः
2.मन्दोपकारिणी [मध्वविजयटीका]
3.मन्दोपकारिणी [मणिमञ्जरीटीका]
4. नखस्तुतिटीका
5. वायुस्तुतिटीका
6.अणुभाष्यटीका

7. मन्दबोधिनी [श्रीमद्भागवत अष्टमस्कन्धटीका]

8. मन्दबोधिनी [श्रीमद्भागवत नवमस्कन्धटीका]

9. श्रुतिगीताव्याख्या

10. तात्पर्यनिर्णयटीका

11.मन्त्रप्रकाशिका

12.प्रमाणचन्द्रिका

13.ईशावास्योपनिषद्भाष्यटीका

14. षट्प्रश्नोपनिषद्भाष्यटीका

15. सुशब्दप्रदीपः

16. निर्णयरत्नम्

17.लघुतिथिनिर्णयः

18. प्रमेयसङ्ग्रहः

19. आशौचनिर्णयः

20. गङ्गास्तोत्रम्

21.छलारीनरसिंहाचार्यस्तुतिः

22. तत्वसङ्ख्यानटीकाटिप्पणी ।

## श्रीआनन्दतीर्थाचार्यकृत पदार्थप्रकाशिका

श्रीआनन्दतीर्थाचार्यः इति श्रीराघवेन्द्रतीर्थश्रीपादानां पूर्वाश्रमस्य बन्धुः । अयं कविः श्रीराघवेन्द्रविजयकाव्यस्य कर्तुः श्रीनारायणाचार्यस्य सहोदरः । पदार्थप्रकाशिकायां प्रतिसर्गस्य प्रतिश्लोकस्य च अलङ्कारविवरणं निरूपितं वर्तते । अभ्यासार्थं आनुकूल्यं भवति ।

**एवमेव श्रीछलारी नरसिंहाचार्यः अपि व्याख्यानं अकरोत् । श्रीमुद्गल आनन्दतीर्थाचार्यः व्याख्यानं चकार इति प्रतीतिः । श्रीलिङ्गेरी व्यासाचार्योऽपि व्याख्यानं चकार इत्यपि प्रतीतिः । परन्तु एतेषां ग्रन्थानां हस्तप्रतयः एतावत्पर्यन्तं नोपलब्धाः । लब्धाः चेत् महदुपकारं भवति जिज्ञासुजनानाम् ।**

## महाकाव्येऽस्मिन् वर्तमानाः संशोधकविषयाः

1. श्रीमध्वविजये एकादशसर्गे वैकुण्ठवर्णनं वर्तते । बहुविस्तृतं विवरणम् । अस्मिन् सर्गे एकोनाशीतिश्लोकेषु वैकुण्ठस्य तत्रत्यमुक्तानाञ्च वर्णनं अस्ति ।

   **ननु तत्र विश्वविभवैकपदं प्रतिभाति पूर्णपुरुषस्य पुरी ।**

   **उपलभ्यते यदुपमानपदं प्रतिबिम्बमेव मणिवप्रगतम्** [मध्व.11.7]

   वैकुण्ठलोकस्य चित्रणं मनोज्ञं चित्रितम् । श्रीमद्भागवते महापुराणेऽपि वैकुण्ठस्य वर्णनं वर्णितम् । एतयोः तौलनिकं अध्ययनम् कर्तुं अवकाशः वर्तते । अतः

   **"मध्वविजयमहाकाव्ये तथा श्रीमद्भागवतमहापुराणे वर्णितस्य वैकुण्ठवर्णनस्य तौलनिकं अध्ययनम्"** इति ।

2. श्रीमध्वविजये अनेकवृत्तानां विवरणं वर्तते । उदा– उपजाति–द्रुतविलम्ब–रथोद्धता–मञ्जुभाषिणी–पथ्यावक्र–मालिनी–स्रग्धरा–आर्या–शालिनी–वसन्ततिलका इत्यादयः वृत्ताः सन्ति अस्मिन् काव्ये । तथैव अलङ्काराः सन्ति । तथैव श्रीवादिराजश्रीपादाः रुक्मिणीशविजये महाकाव्ये काव्यलक्षणानुगुणं विविधवृत्तैः वर्णनं चकार । अलङ्कारस्य वृत्तस्य च ज्ञानं अध्ययनार्थं अत्युपयुक्तम् । अतः

   **श्रीमध्वविजयमहाकाव्ये तथा रुक्मिणीशविजयमहाकाव्ये निरूपितानां वृत्तानां अलङ्काराणां तौलनिकं अध्ययनम्"** इत्यस्मिन् विषये अवकाशः अस्ति ।

3. संस्कृतवाङ्मये तौळवमण्डलस्य उपायनं महत्वपूर्णम् अपूर्वञ्च । अस्मिन् प्रदेशे अनेके यतयः अनेके गृहस्थाः संस्कृतक्षेत्रं श्रीमन्तं अकुर्वन् । तेषां नामाऽपि इदानीं न श्रुण्मः । तेषां कृतयः अपि अप्रकटिताः । अतः तेषां उपकारस्मरणार्थं विशेषाध्ययनं भवितव्यम् ।

**"संस्कृतवाङ्मये तौळवमण्डलजानां उपायनम्"**

इत्यस्मिन् विषये विशेषाद्ययनार्थं अवकाशः वर्तते ।

4. लिकुचवंशजाः सर्वे कवयः । तौळवमण्डलस्य भूषणाः । एतेषां योगदानं अधिकृत्य विशेषाध्ययनं कर्तुं शक्यते ।

**"लिकुचवंशजानां परिचयः कृतिश्च" इत्यस्मिन् विषये विमर्षात्मकं अध्ययनम्"** इति ।

